# संलापसरणिः



रचयिता

डॉ. रवीन्द्रकुमारः पण्डा

अर्वाचीनसंस्कृतसाहित्यपरिषद्,
बडौदा

# संलापसरणिः

रचयिता

डॉ. रवीन्द्रकुमारः पण्डा

प्राध्यापकः

संस्कृतपालीप्राकृतविभागे
म.स. विश्वविद्यालयः
बडौदा - ३९०००२.

अर्वाचीनसंस्कृतसाहित्यपरिषद्
बडौदा

# SAṀLĀPASARAṆIḤ

## (A Collection of Short Dialogues)

By

Rabindra Kumar Panda

**First Edition** - **July, 2009**
**Copies** - **200**
**Price** - **Rs. 100/-**

**Publisher -**
**Arvacina Sanskrit Sahitya Parisad**
C-62 , Akshardham Tenaments,
Opp. Mathuranagari, Old Padra Road,
Baroda - 20.
Ph.: 0265 - 232554
M.: 99742 62038

**Printer**
**Net Enterprise**
**Baroda.**
**M.: 94262 77690**

# प्रस्तावना

आनन्दस्य विषयो यत् मम पुस्तकं 'संलापसरणिः' प्रकाशितं भवति। अस्मिन् पुस्तके बालानां सुखबोधाय संलापाः संरचिताः। संस्कृतभाषा कठिनेति मत्वा छात्राः संस्कृतं न वदन्ति। तेषामुपकाराय अयमेव प्रयत्नः। लघुलघुवाक्यानामभ्यासद्वारा ते संस्कृतभाषया व्यवहारं कर्तुं शक्नुवन्ति। परन्तु एतेषामभ्यासोऽत्यावश्यकः। अस्मिन् पुस्तके सरणिरेव प्रदर्शितास्ति। यदि एतद्द्वारा विद्यार्थीनामुपकारो भवेत् तर्हि आनन्दमनुभविष्यति मे चेतः।

रवीन्द्रकुमारः पण्डा
बडौदा

दिनाङ्कः १०–०७–२००६



# संलापः - १

गोविन्दः - नमो नमः।

गोपालः - नमो नमः।

गोविन्दः - अहो भाग्यम्। अत्र भवतामाकस्मिकं दर्शनं जातम्। कथं वर्तते भवान्? किमधुना प्रचलति?

गोपालः - आम्, शोभनम्। धन्यवादः कथमस्ति भवान्? किं करोति? स्वास्थ्यं कथमस्ति?

गोविन्दः - सर्वं कुशलमस्ति। धन्यवादः। ईश्वरस्य दयास्ति।

गोपालः - इयत्कालं यावत् कुत्रासीद् भवान्?

गोविन्दः - अहमतीव कार्यरत आसम्।

गोपालः - किं नूतनमस्ति?

गोविन्दः - न किमपि नूतनम्। सर्वं प्राचीनमेव।

गोपालः - भवतां कोऽपरः समाचारः।

गोविन्दः - नान्यः। नाधिकं किञ्चिदस्ति।

गोपालः - कथं कार्यं चलति?

गोविन्दः - यथा तथा चलति। न कोऽपि विशेषः। कार्यभारेण मम श्वसितुमपि समयो नास्ति। कालः कथं पलायते न प्रतीयते। कर्मणि सुखमस्ति।

गोपालः - ममापि कुशलमस्ति सर्वम्। प्रमुदितोऽस्मि। यत्प्राप्यते तेनैवानुभूयते महान् सन्तोषः। सर्वं सुखं प्राप्यते सन्तोषेन?

गोविन्दः - सुष्ठु, सुष्ठु, सर्वं शुभमस्ति चेत् किं चिन्तनेन? परन्तु कर्म कर्तव्यम्।

गोपालः - भवतां दर्शनेन सुखीभवामि। आनन्दो मनसि जातोऽस्ति।

गोविन्दः - अहमपि प्रमुदितोऽस्मि भवतां दर्शनेन।

गोपालः - अस्तु, मम कार्यान्तरमस्ति। तस्माद् गमनीयम्।

गोविन्दः - अहमपि कार्यान्तरे व्यापृतोऽस्मि । गमनीयमस्ति ममापि ।

गोपालः - कृपया क्षम्यताम् । गच्छामि ।

गोविन्दः - अस्तु, अनन्तरं मिलिष्यावः ।

गोपालः - पुनर्दर्शनाय । शिवास्तु ते पन्थानः ।

गोविन्दः - अस्तु । स्मरणमागतम् । का तव दूरवाणीसंख्या अस्ति ?

गोपालः - एकं कार्यमस्ति । अन्यदा कथयिष्यामि । अधुना समयाभावः ।

गोविन्दः - अवश्यम् । अवश्यम् ।

गोपालः - त्वमित्थं कुरु। एकदा मम गृहमागच्छ। शान्तौ वार्तालापं करिष्यावः। अन्यापि विचारणा कर्तव्यास्ति। त्वमवश्यमागच्छ।

गोविन्दः - अस्तु, आगमिष्यामि । नूनमागमिष्यामि ।



# संलापः - २

रामः - अरे, राम, किं करोति ?

श्यामः - न किञ्चिदपि करोमि।

रामः - कथं न करोति किञ्चित् ?

श्यामः - किमपि कर्तुं मनो न भवति।

रामः - किं मानसिकं किञ्चिज्जातम् ?

श्यामः - किमपि न जातम्। सर्वं व्यवस्थितमस्ति।

रामः - तर्हि भवान् प्रसन्नः कथं नास्ति ?

श्यामः - प्रसन्नः कथं भवामि। परिश्रमः क्रियते। किन्तु फलं न मिलति।

रामः - एतदर्थं भवान् चिन्तां कथं करोति ?

श्यामः - किं न जानन्ति भवन्तः - 'भाग्यं फलति सर्वत्र, न विद्या न च पौरुषम्'

रामः - अहं सर्वं जानामि। परन्तु भाग्योपरि मम विश्वासो नास्ति।

श्यामः – विद्यते उत्तररामचरिते रामः कथयति 'सर्वं मन्दभाग्यं करोति' -

रामः - नाहं तथा कथयितुं शक्नोमि। कर्मणि मम विश्वासः।

श्यामः - अहं कर्म करोमि यथाशक्ति पश्यामि, किं भवति ?

रामः - किं भविष्यति ? फलं स्वतरागमिष्यति। ईश्वरो न निर्दयः।

श्यामः - त्वं स्मरसि - कर्णेन किं कथितम्। तेन कथितम्। - दैवायत्तं कुले जन्म मदायत्तं च पोरुषम्।

रामः - सत्यमुक्तं तेन। समीचीनमस्ति । अस्माभिस्तत्तु सर्वदा स्मरणीयम्।

श्यामः - न केवलं स्मरणीयम्। परन्तु करणीयम्। सुभाषितमस्ति -''न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः''।

रामः - अरे, अधुना प्रायः सर्वे मृगाः। 'मनुष्यरूपेण मृगाश्चरन्ति' संसारे।

श्यामः – कथं सर्वे मृगाः ?

रामः – अरे यो मृगयते स मृगः। अस्मिन् संसारे सर्वे मृगयन्ते। कति धनं मृगयन्ते, कति जनं मृगयन्ते, कति विपिनं मृगयन्ते। कति सदनं मृगयन्ते। कति श्मशानमपि मृगयन्ते।

श्यामः – परन्तु कालिदासेनोक्तम् – न रत्नमन्विष्यति, मृग्यते हि तत्।

रामः – परन्तु वयं न मृगाः। वयं अमूल्यानि रत्नानि। अस्माकं देशस्य गौरवभूतानि रत्नानि। अस्माकमुपरि निर्भरयति देशः। वयं समर्थाः, शक्ताः शिक्षिता युवानः। वयं नवप्रभातस्य भास्कराः। वयं चन्द्रतुल्याः सुन्दराः। अन्धं तमः नाशयितुं वयं पारयामः। गगनं चुम्बितुं पारयामः।

श्यामः – सत्यं, अधुना तव मुखमुद्रा परिवर्तिता। कस्मात् शक्तिः समागता ?

रामः – अरे, भवानेव मम शक्तिः।

श्यामः – अरे, भवादृशानां सुहृद्वराणां दर्शनेन स्वतः शक्तिरुदेति।

रामः – अहं तर्हि शक्तिमान्।

श्यामः – आम्, बाढम्। विषयेऽस्मिन् न कोऽपि सन्देहः।

रामः – अहं कथं तस्याः शक्त्या अनुभवं न करोमि।

श्यामः – त्वम् चन्दनवृक्षः। तव शरीरे सौरभमस्ति। परन्तु त्वं न जानासि। तत् सौरभं जनानाकर्षति। अहमपि तेनैवाकर्षितः।

रामः – सत्यं वदसि ?

श्यामः – अवश्यं सत्यं वदामि।

रामः – अद्यावधि कथं नोक्तम्।

श्यामः – अरे, सर्वं योग्यकाले कथनीयम्।

रामः – अयं योग्यकालः।

श्यामः – आम्। अस्तु, अहं गच्छामि।

रामः – अस्तु, पुनर्दर्शनाय।

# संलापः – ३

सुन्दरः – कदा भवान् शय्यात्यागं कुरुते ?

मयूरः – अहं सप्तवादने शय्यां त्यजामि ।

सुन्दरः – प्रातरुत्थाय भवान् किं किं कुरुते ?

मयूरः – प्रथमं मुखं प्रक्षालयामि, ततो दन्तमार्जनं करोमि, तदनु शौचादिकं कर्म समापयामि। स्नानं करोमि। पूजनं करोमि। जलपानं करोमीत्यादिः ।

सुन्दरः – मित्र । भवान् तदनन्तरं किं किं करोति ?

मयूरः – अहं योगाभ्यासं करोमि ।

सुन्दरः – सखे ! भवान् कथं प्रतिदिनं योगाभ्यासं करोति ? किं किं करोति? किं प्रकारं योगमाचरति ?

मयूरः – किं भवान् न किञ्चित् करोति ।

सुन्दरः – न करोमि । समयो न मिलति ।

मयूरः – कार्यालये सेवां करोमि। येन केन प्रकारेण धनोपार्जनं कृत्वा केवलं परिवारं पोषयन्नस्मि ।

सुन्दरः – मित्र ! यदि सर्वे आत्मविद्यां प्रति आकृष्टा भविष्यन्ति तर्हि संसारश्चलिष्यति कथम् ? अतः पदार्थविज्ञानस्यापि प्रयोजनमस्ति ।

मयूरः – सत्यम्, समाजे जीवितुमुभयोः आत्मज्ञानजडविज्ञानयोर्युगपत् प्रयोजनं वर्त्तते ।

सुन्दरः – सत्यं, संसारे प्रयोजनमनुलक्ष्य प्रचलन्ति जनाः । प्रयोजनार्थं ते कार्याणि कुर्वन्ति ।

मयूरः – इदं सत्यं यत् सर्वस्य मूले विज्ञानमस्ति। त्वं जानासि, विज्ञानं ब्रह्म। विज्ञानमात्मा। जीवनस्य लक्ष्यम्। तदेव परमपुरुषार्थः। तस्य प्राप्तिर्मोक्षपदेन उच्यते। अतो मोक्षशब्दस्यार्थः

अज्ञानहानिः ।

सुन्दरः - त्वया दीर्घभाषणं दत्तं विज्ञानविषये। अहं विज्ञानं पठामि। किन्तु एतत् सर्वं न जानामि। विज्ञानविषये मम मनसि भ्रान्तधारणा आसीत्। अहमन्ध आसम्। त्वया मम नेत्रमुन्मोचितम्। मम हृदयं प्रसन्नं जातम्। अधुना अहं प्रकृतविज्ञानविषयेऽनुसन्धानं करोमि। अज्ञानमपसारयामि।

मयूरः - अवश्यं संशोधनीयम्। विज्ञानं ज्ञातव्यम्। विज्ञानं धातव्यम्। विज्ञानं स्मर्तव्यम्। विज्ञानामृतं पातव्यम्। विज्ञानं दिव्यौषधिः। विज्ञानं महामन्त्रः। विज्ञानं शिवः। विज्ञानं शक्तिः। विज्ञानं जगतो मूलाधारः।

सुन्दरः - आम्, विज्ञानेनासुन्दरं सुन्दरं भवति। अरूपं रूपं धारयते। बधिरः शृणोति। पङ्गुश्चलति। पामरः पाकशासनो भवति।
पशुर्मानववत् कार्यं करोति। तेन विज्ञानेन वासना नश्यति।

मयूरः - तेन विज्ञानेन भावना नश्यति। यातना नश्यति। नश्यति अन्धतमसा। प्रकाशो निकटमायाति। आनन्दः स्वयमुदेति।
शक्तिः स्वतः शरीरे सञ्चरते। महादेवायते मनुष्यस्तेन विज्ञानेन।

सुन्दरः - कीदृशं सुन्दरं विज्ञानम्? कीदृशं प्रमोदकरं विज्ञानम्?

मयूरः - अस्तु, विज्ञानं न विस्मरणीयम्। तस्य प्रचारः करणीयः। अस्मिन् विषये कथं जनाः ज्ञास्यन्ति तदर्थमस्माभिर्यत्नः करणीयः। तदर्थं कर्म कर्तव्यम्। देशस्य प्रगतये विज्ञानमावश्यकम्। जनानां सुखाय विज्ञानमावश्यकम्। लोकतन्त्रस्य कल्याणार्थं कारणं तव मिलनम्। तव दर्शनम्। संसारे स्वल्पा मनुष्याः सन्ति येऽन्येषां हृदयमाकर्षन्ति। किम्भूतं चुम्बकीयतत्त्वं तेषां हृदयेऽस्ति भगवान् जानाति। ते सर्वदा समाकर्षन्ति। ते सर्वदा स्मरणपथं समागच्छन्ति। तेऽपि सर्वदा भावनावैभवमलंकुर्वन्ति। मण्डयन्ति ते चित्तमण्डपम्। खण्डयन्ति चित्तस्थं नैराश्यबोधम्। संवर्धयन्ति

सततं स्नेहसम्पत्तिम्।

सुन्दरः - तस्मात्तेऽविस्मणीया भवन्ति। समयस्य महारथो धावति सत्यं, स्मृतिः किन्तु चित्तपिञ्जरे तथैवाक्षुण्णा तिष्ठति।

मयूरः - मत्कृते तवास्ति महान् आदरः। महान् प्रेम। इदं तव विशालहृदयस्य परिचयः। तवोन्नतमानसिकतामात्रम्। अहं धन्यो भवामि सामान्यं कृतं कथितं वा यद्द्वारा तवोपकारो जातः। कदा कदा सामान्यकथनमपि लाभदायकं भवति।



# संलापः – ४

रामः – नमस्ते, राम!

श्यामः – नमस्ते, श्याम!

रामः – किं भोजनं समाप्तम्.

श्यामः – कुत्र भोजनम्? न कोऽपि भोजनविषये चिन्तयति।

रामः – परन्तु भोजनार्थमहमत्रागतः। यदि भोजनस्य व्यवस्था नास्ति, अहं गृहं गमिष्यामि। वृथा कालक्षयेन किम्?

श्यामः – अरे, ममापि घन्टाद्वयं गतम्। केवलं भाषणं शृणोमि। दीर्घं दीर्घं भाषणम्। शोषणार्थं सर्वं भाषणम्। वञ्चनार्थं सर्वं नाटकम्। लाभार्थं योजना।

रामः – अरे, त्यज तत्। भोजनस्य व्यवस्था अस्ति न वा?

श्यामः – व्यवस्थास्ति। अन्यथात्र क आगच्छेत्। कथमागच्छेत्। किं भाषणश्रवणार्थं जना आगच्छन्ति। अधुना जना अपि चतुरा जाताः। न केवलमस्माकं नेतारः।

रामः – त्वं सत्यमुक्तम्। स्पष्टमुक्तम्। अहमपि भोजनार्थमागतः। यदा निमन्त्रणपत्रं मन्निकटमायाति तदा आदौ अहं तत्र भोजनसमयं पश्यामि। यदि तत्रोल्लेखो नास्ति तर्हि तद् विदारयित्वा संकरनिचयस्थाने (dustbin) क्षिपामि। नान्यत् पश्यामि। सूचीदर्शनस्य का आवश्यकता? माल्यार्पणं समुचितं भवतु न वा अस्माकं का हानिः?

श्यामः – अरे, त्वं महाचतुरो जातः।

रामः – किं त्वं न चतुरः। स्मरसि, त्वयैव एकस्मिन् दिने इत्थमुपदिष्टम्। अहं तव मार्गमनुसरामि। त्वं मम मार्गदर्शकः।

श्यामः – अरे, इत्थं न वद।

रामः – त्यज सर्वम्। भोजनविषये विचारय। खाद्यमागतं न वा पश्य।

ममोदरे मूषिको धावति। कष्टं भवति।

श्यामः - तवोदरे मूषिको धावति। किं तत्र धावनार्थं स्थानमस्ति। पृथुलमस्ति मन्ये तत्। तर्हि त्वं लम्बोदरः। आनन्दस्य विषयो यन् मूषिको धावितुं समर्थः। उदरे मम मूषिकः प्रतीक्ष्य प्रतीक्ष्य मृतः। किं करोमि ? अस्ति कोऽपि वैद्यो निकटे। अस्ति कोऽपि चिकित्सालयो वा ?

रामः - अत्र किञ्चिन्नास्ति।

श्यामः - हे, कोलाहलो जायते। चल शीघ्रं चल। प्रायो भोजनं प्रारब्धम्।



# संलापः – ५

माधवः – हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे।
हरे राम हरे राम राम राम हरे हरे ॥

मालती – प्रतरुत्थाय कथं कँ कँ करोषि ?

माधवः – अहं कँ कँ करोमि ? किं वदसि ?

मालती – आम्, किमन्यत् करोति भवान्।

माधवल – अहं मन्त्रोच्चारणं करोमि।

मालती – त्वं ? मन्त्रः ? तव मन्त्रोच्चारणेऽस्ति श्रद्धा। केवलं दर्शनाय कथं नाटकं करोषि ?

माधवः – अहं न नाटकं करोमि। अहं भगवन्तं स्मरामि। तेन स्मरणेन पापक्षालनं करोमि। त्वं जानाति विष्णुस्मरणमात्रेण सर्वपापाद् विमुच्यते।

मालती – सर्वमहं जानामि। भवादृशानां पण्डितानां नाटकानि। यस्य कार्यान्तरं नास्ति स इत्थं करोति।

माधवः – त्वं मूर्खा। तव नास्ति बोधशक्तिः। तदर्थं त्वमित्थं वदसि। हिताहितं विचारयितुं त्वं न समर्था। तव शिक्षा नास्ति, दीक्षा नास्ति। भक्तिर्नास्ति। श्रद्धा नास्ति। अस्ति केवलं कुचित्तवृत्तिः। त्वं महापापिनी। परजन्मनि तव नरकेऽवश्यं वासो भविष्यति।

मालती – अरे ! किं जल्पसि ? किं प्रजल्पसि ? तव प्रलापेन किम् ? संसारे सर्वे जानन्ति – किं सत्यम् ? किमसत्यम् ? भवादृशो महापापी जगति विरलः। हृदयेऽन्यत्। कथनेऽन्यत्। अन्तरं मलकुण्डम्।

माधवः – त्वं गदर्भा। विवेकभ्रष्टा। अयोग्या। अन्धा। तव दर्शनार्थं शक्तिर्नास्ति। श्रवणार्थं धैर्यं नास्ति। अवबोधार्थं सामर्थ्यं नास्ति। त्वं कीटतुल्या।

मालती – किन्तु न भवादृशो नटः ।

माधवः – अहं नर्तनं न करोमि ।

मास्तु भाषणम् । तव बहु भाषणं श्रुतम् । विवाहकालादारभ्य तव भाषणं हि शृणोमि । तदर्थमहं मृतप्राया । अस्मिन् गृहे नास्ति सुखम् । नास्ति शान्तिः । सर्वं नैराश्यमयम् । अत्र शान्तौ शयितुमपि न कोऽपि शक्नोति । प्रस्थरनिकटे रोदनं वृथा । वननिकटे वेदना वृथा ।

मालती – अहं किं प्रस्थरः ।

माधवः – नहि नहि भवान् सूकरः । तव हृदयं नास्ति, विचारो नास्ति । अस्ति केवलं स्थूलशरीरम् । घनघोरः चीत्कारः । पाण्डित्याभिमानः ।

मालती – मल्लिके ! किं जातम् ? त्वमुन्मादिनी सञ्जाता । किं जल्पसि स्वयमपि न जानसि । तव बुद्धिर्नष्टा ।

माधवः – त्वत्सकाशात् सर्वं मम नष्टम् ।

मालती – सर्वं नष्टम् ?

माधवः – आम्, आम्, सर्वं नष्टम् । यौवनं नष्टम् । मनो नष्टम् । शरीरं नष्टम् । प्रतिपदं कष्टमनुभवामि त्वया सह । स्वप्नाः शयने विनष्टाः । तवादृशस्य नराधमस्य हस्तं धृत्वा न किञ्चिदपि प्राप्तं जीवने । जीवनं शून्यमिव जातम् । वनभूमिरिव मनो जातम् ।

मालती – अद्यानुभूतं त्वं किं वस्तु । त्वं सर्पिणी । दंशनं तव स्वभावजम् ।

माधवः – (स्मितं हसित्वा) तर्हि त्वं सर्पः ।

मालती – अहं कथं सर्पः ?

माधवः – यदि त्वं न सर्पः, अहं कथं सर्पिणी । अहं तव राधा । अहं तव सुधा । अहं तव सौदामिनी । अहं तव प्रणयपृथिवी । त्वं मम जीवनकल्पद्रुमः ।

मालती – कथं सहसा एतादृशं प्रेम ।

माधवः – प्रेम भवदुपरि सर्वदास्ति । इदं नाकस्मिकम् । अन्यथा मा चिन्तय ।

मालती - कदा निन्दसि, कदा क्रन्दसि, कदा क्षिन्दसे हृदयम्। अबोध्या त्वम्। अशोच्या त्वम्। अकल्पनीया त्वम्।

माधवः - प्रेम इत्थं भवति, महात्मन्। भवान् पण्डितः। शास्त्राणि सम्यगधितानि। वेदाः कण्ठस्थीकृताः। रामायणं मुखस्थम्। गीतामृतं पीतम्। पुराणसमुद्रे निमज्जितम्। काव्यवने भ्रमितम्। सरस्वती तव रसनाग्रनर्तकी। विद्या तव सिद्धिः। किन्तु प्रेमविद्यायामस्माकं पाण्डित्यमस्ति। प्रेममन्त्रः अस्माभिरेव ज्ञातः। प्रेमतन्त्रे अधिकारोऽस्ति अस्माकम्। प्रेमयन्त्रस्य चालका वयम्। प्रेमविज्ञानस्य भावुका वयम्। प्रेमपवनस्य सञ्चालका वयम्।

मालती - प्रिये! अहं धन्योऽस्मि। अहो भाग्यम्। तर्हि त्वमपि पण्डिता।

माधवः - अथ किम्? न भवादृशः।

मालती - अद्यावधि मया केवलं चिन्तितमहं पण्डितः। भवत्याः विषये...

माधवः - इदं तवाज्ञानम्। अद्य तदेव नष्टम्। अद्य तव मुक्तिः, मोक्षदिवसः। यतोऽ ज्ञानहानिर्जाता। विज्ञानमनुभूतम्।

मालती - प्रिये न कामये मोक्षं, न कामये वैकुण्ठम्। कामये तव कण्ठाश्लेषम्।

माधवः - स्वागतम्, स्वागतम्।



# संलापः – ६

माया – नमस्ते प्रीति।

प्रीतिः – नमस्ते, माये।

माया – किमधुना अवकाशः।

प्रीतिः – आम्, विद्यालयेऽवकाशोऽस्ति। परन्तु मम कार्यं चलति।

माया – किं कार्यं करोषि?

प्रीतिः – संशोधनं करोमि। तेन महान् आनन्दो जायते। ज्ञानसिन्धौ निमज्जनं सुखदायकमस्ति। अवकाशो मया अस्मिन् कार्ये नियोजितः। कार्यान्तरं मह्यं न रोचते।

माया – परन्तु संशोधनं न मां प्रीणाति। मत्कृते संशोधनं दुःखदायकमस्ति।अनेन मम शिरोव्यथा जायते। मनो मम कदापि संशोधने न लगति। प्रयत्नं करोमि किन्तु दशा सर्वदैव समाना।

प्रीतिः – यदि मनो न लगति तर्हि संशोधनं न कुरु। यस्मिन् मनो प्रमुद्यते तत्तु करणीयम्। तेन सन्तोषो भवति। श्रमोऽपि न लगति।

माया – मम मनः सर्वदा लिखितुं कामयते। किमपि नूतनं स्रष्टुम्। किमपि नूतनं विचारयितुम्। इदमपि एकमनुसन्धानम्। तेन नवनवा विचारा आगच्छन्ति। नूतनमपि उत्पद्यते। तेन प्रसन्नं भवति मे मनः। अवर्णनीयमानन्दमनुभवति।

प्रीतिः – आनन्दः सर्वत्रास्ति। ज्ञानविषयकेषु सर्वेषु कार्येषु। ज्ञानस्य सम्पादने, सञ्चयने, संग्रहणे, संशोधने, प्रकाशने, विकाशने च। तस्मात् कथितमिदं गीतायाम् – "नहि ज्ञानेन सदृशं पवित्रमिह विद्यते।"

माया – सत्यम्, सत्यम्। यत्किमपि ज्ञानविषयकं कार्यं कर्तव्यम्। अध्ययनं सुखदायकमस्ति। त्वं जानासि, अध्ययनमपि योगविशेषः। अध्ययनेन चिच्छक्तिर्माजिता भवति।

विचारशक्तिर्वर्धते। बुद्धि स्मूक्ष्मा भवति। चित्तमपि निर्मलं भवति। यदा अध्ययने ध्यानकेन्द्रितं भवति मनसि कुविचारा नायान्ति। मनः शान्तं भवति। हृदयं प्रसन्नं तिष्ठति।

प्रीतिः - मानवोऽनुभवति अकल्पनीयमानन्दम्। तथैव अध्यापनमपि सुखदायकमस्ति। यद् ज्ञानमर्जितं तत्तु प्रदेयम्। तद्द्धारा समाजस्य महत् कल्याणं भवति। जना उपकृता भवन्ति। इयमेका समाजसेवा। समाजस्य कल्याणार्थं ज्ञानं संग्रहणीयं तथा प्रदेयम्। सर्वेषामध्यापनशक्तिर्नास्ति। परन्तु तस्याः शक्तेवर्धनार्थं यत्नः करणीयः। अध्यापनमाध्यमेन असीमज्ञानभण्डारं लोकलोचनमायाति। इदं कार्यं दुष्करमस्ति। कठिनमस्ति। विशेषतोऽस्य कार्यस्य कृते श्रद्धावश्यकी। यथा गीतायामप्युक्तं - "श्रद्धावान् लभते ज्ञानं"- तथैव श्रद्धावान् भवति अध्यापकः। ज्ञानबीजं संवर्धयति श्रद्धाम्। श्रद्धा एका मानसिकी शक्तिः। अयं संस्कारो बालकेभ्यः प्रदेयः।

माया - तदावश्यकमस्ति। अधुना बाला हतोत्साहिनो भवन्ति। तेषां ज्ञानं प्रति श्रद्धा न तादृशी दृश्यते यादृशी प्राचीनकाले आसीत्। परन्तु इदं निश्चितमस्ति श्रद्धा विना ज्ञानं साध्यं न भवेत्। तत्कृते यत् निरन्तरं प्रोत्साहनमावश्यकम्। प्रेरणावश्यकी। तैः साधकस्य श्रमो भवति। कार्यमपि शीघ्रं भवति। सरलं भवति। समयोऽपि सञ्चितो भवति।

प्रीतिः - अवश्यम्। अधुना साधनानि सुलभानि। साधका न सुलभाः। साधना आवश्यकी। अन्यथा समाजस्य प्रगतिः कथं भवेत्। त्वं स्मरसि, समयो आसीत् यदा जना वेदान् स्तुत्वा संरक्षन्ति स्म। तस्माद् वेदस्य नाम शृतिः। आसीदियं कीदृशी महती परस्परा। विज्ञानभण्डारं सुरक्षितं च ते धन्याः। ते महान्तः। तेऽस्माकं प्रातःस्मरणीयाः। तेषां स्मरणं कृत्वा वयमपि अग्रेसरामः। ते यथार्थेन अस्माकं ज्ञानतर वः।

# संलापः – ७

वसुधा - मातः । अद्य मम प्रियमित्रस्य जन्मदिवसः। अहं तदर्थं निमन्त्रितास्मि। अहं किमपि वस्तूपहारूपेण दातुमिच्छामि। भवत्याः किं मतम् ?

माताः - अवश्यं दातव्यम् । तव बन्धुः प्रसन्नो भवेत् ।

वसुधा - तर्हि किं देयम् ?

माताल - त्वं चिन्तय। तव मित्रमस्ति। तस्य कीदृशी प्रवृत्तिः अहं न जानामि ।

वसुधा - मातः । मम मित्रं विद्याप्रियोऽस्ति। अध्ययनं तस्य जीवितमिव। यदा पश्य तदा अध्ययनं करोति। ग्रन्थप्रियोऽस्ति। उत्कृष्टपुस्तकानां संग्रहे तस्यास्ति महती रुचिः। यदा अवकाशं लभते तदा नगरस्य पुस्तकालयेषु अथवा पुस्तकविक्रयकेन्द्रेषु भ्रमति । उत्तमान् पुस्तकान् क्रीणाति । अवकाशसमये पठति ।

माताः - शोभनम् । शोभनम् । प्रशंसनीयमिदं कार्यम् ।

वसुधा - मातः ! त्वं जानासि, तस्य गृहेऽपि एकः पुस्तकालयोऽस्ति । अतीव सुन्दरोऽस्ति संग्रहः। नानास्थानेभ्यः पुस्तकानि संगृहितानि। कति जनाः पुस्तकदानमपि कुर्वन्ति। तेषां दानेन धनवान् भवति मम मित्रम् ।

माताः - अतीव सुन्दरम्। परन्तु त्वमित्थं कथं न करोषि। तव गृहेऽपि स्थानमस्ति । त्वमपि विचारय । त्वयापि प्रयत्नः करणीयः ।

वसुधा - परन्तु मातः । अस्माकं कक्षायां सर्वे छात्रास्तमुपहसन्ति । कथयन्ति स ग्रन्थकीटः, महापण्डितः। स कदा कदा दुःखी भवति। मां पृच्छति - किमेते मूर्खाः उताहं मूर्खोऽस्मि। मां कथमुपहसन्ति। एतेषां किं विवेको नास्ति। पठनार्थमागच्छन्ति, पठनकार्य

निन्दन्ति। कथमेतेषामुत्थानं भवेत्। एते भविष्यति किं करिष्यन्ति? मपि यदि एकवारं बालकानां मनःसु श्रद्धा समुपद्येत, तर्हि न किञ्चिदपि आवश्यकम्। अर्थात् ते स्वयं सर्वं करिष्यन्ति। साधनानि अवश्यमेव आवश्यकानि।

वसुधा - मित्र- भवादृशा न सर्वे संसारे। एतेषामध्ययनार्थं वस्तुतः श्रद्धा नास्ति। भयादागच्छन्ति। अत्रागत्य क्रीडन्ति, हसन्ति, खिन्दन्ति, निन्दन्ति, गडन्ति प्रस्तरा इव। न किन्तु मृडन्ति। विद्या एतान् न सुखं ददाति। त्वत्सदृशाः स्वल्पाः सन्ति जगति। परन्तु त्वया चिन्ता न कर्तव्या। इदं तव मानस्य सूचकम्। नापमानस्य। स सुस्थिरो भवति। तस्मात् स मम वाक्यं शृणोति। मया सह विचार्य सर्वं कार्यं करोति। अहमस्मि तस्यातिप्रियः। सोऽपि मम अन्तरङ्गः।

माताः - सुन्दरम्, सुन्दरम्। तर्हि विद्यालये एतत् सर्वं चलति ? किं शिक्षका अस्मिन् विषये जानन्ति ?

वसुधा - न, अस्मिन् विषये शिक्षका न जानन्ति। वयं न वेदयामः। परन्तु राकेशः शिक्षकाणामपि प्रियः। सर्वे शिक्षकास्तं प्रशंसन्ति। विद्याविषयकेषु कार्यक्रमेषु अग्रे भवति।

माताः - स कुत्र निवसति। तेन सह मिलनमावश्यकम्।

वसुधा - स योगेश्वरनगरे निवसति।

माताः - योगेश्वरनगरं अकोटा उद्याननिकटे वर्तते। अस्माभिस्तस्य गृहं गमनीयम्।

वसुधा - अस्तु, एकदा समयं सञ्चित्य गमिष्यामः। त्वया अहं स्मरणीया। अन्यथा अहं विस्मरिष्यामि।

माताः - अहं स्मारयिष्यामि। अद्य यदि समयोऽस्ति, आगच्छ मया सह। अहं गमिष्यामि सायंकाले।

वसुधा - नहि, नहि। अद्य तस्य जन्मदिवसः। अहं कथं वाधां सृजामि। त्वं गच्छ। सुन्दरमुपहारमेकमर्पय।

माता: - मया चिन्तितं - भगवद्गीतामुपहरिष्यामि। तत्तु योग्यमस्ति। तेन तस्य महान् लाभो भवेत्। महात्मागान्धिमहोदय: प्रतिदिनं गीताया: पाठं कृतवान् आसीत्। 'गीता सुगीता कर्तव्या किमन्यै: शास्त्रविस्तरै:' मम शिक्षका: कथयन्ति स्म।

नास्ति गीतासमं रत्नं नास्ति ज्ञानसमं मधु।
नास्ति सीतासमा पत्नी नास्ति रामसम: पुमान्॥

भारतस्य धनं गीता वसुधाया विभूषणम्।
किं नास्ति वद मे गेहे यद्यस्ति वै गीताधनम्॥

गीता भगवतो वाणी विश्वमङ्गलकारिणी।
तारिणी सर्वलोकानां पापतापविनाशिनी॥

वसुधा - अहमद्य अतीव प्रसन्ना। भगवन्तं प्रार्थये, त्वं दीर्घजीवनी भव।



# संलापः – ८

देवः – मन्दिरमिदं सुन्दरमस्ति।

सुनीलः – आम्, अतिसुन्दरमस्ति। अत्र परिवेशो रमणीयः। स्थानमिदं निर्मलम्। यतो महादेवो जगन्नाथो विराजते ततोऽस्ति सुखम्। अनन्ता शान्तिः। आगमनात् सुखमुत्पद्यते। यदा समयो मिलति तदहमत्रागत्य पूजनं करोमि। ध्यानमपि करोमि।

देवः – त्वं प्रतिदिनमागच्छसि?

सुनीलः – प्रतिदिनमागन्तुं न पारयामि।

देवः – प्रायो रविवासरे आगच्छामि। रविवारस्य सांयकाले आगच्छामि।

सुनीलः – अहमद्य एवागतः। इदं मम प्रथमदर्शनम्। अत्र ग्रन्थालयोऽप्यस्ति। सांयकाले सभाप्यनुष्ठियते। सत्सङ्गोऽपि चलति। असंख्या जना आगच्छन्ति। भजनं, किर्तनं, पूजनं, प्रवचनश्च भवति। पश्य नु, अस्माकं शाश्वतं सुखं कुत्रास्ति वयं ज्ञातुं शक्नुमः। अस्माकं पन्थानं वयं निर्धारयितुं शक्नुमः।

देवः – सम्यग् वदसि। अहं त्वयासहैकमतः। इत्थं न सर्वे चिन्तयन्ति।

सुनीलः – कथं न चिन्तयन्ति? किमेते चिन्तयितुमसमर्थाः? किं तस्य कारणम्?

देवः – नासमर्थाः। सर्वेषां जनानां चित्तवृत्तिषु ईश्वरेण चिन्तनशक्तिः प्रदत्तास्ति। किन्तु भोगप्रभावात् सैव चिन्तनशक्तिः कार्यं न करोति। यथा बीजं पाषाणखण्डतले निष्फलं भवति यथा कामवशगो रावणो हिताहितमविचार्य सीताहरणं कृतवान्, मोहवशाद् यथा दुर्योधनः स्वमरणमामन्त्रितवान्, अहंकारवशाद् यथा कंसः स्वयमेव स्वमरणस्य कारणमभवत्।

एतादृशा मानवा अस्यामेव भूम्यामसंख्या: सन्ति। तेषां जन्म निरर्थकम्। तेषां विषये विचारणा अस्माभिर्न कर्तव्या। अस्माभि: केवलमस्माकं सुखविषये चिन्तनं कर्तव्यम्।

सुनील: - तव सुवचने याथार्थ्यमस्ति । अहं भवादृश: सर्वदा आत्मानं प्राधान्यमर्पयामि। आत्मकैन्द्रिको भवति सर्वदा मम विचार: ।

देव: - परन्तु नाहं स्वार्थपर: । अन्येषां यथासम्भव उपकार: कर्तव्य: । दरिद्राणां सेवा करणीया। अनाथानामसहायानां च साहाय्यं करणीयम्। अध:पतितानामुत्थानाय प्रयत्न: करणीय:। यत् समाजस्य कृते हितकरमस्ति तत् सर्वं विधेयम्। किन्तु मूर्खे कदापि उपदेशो न दातव्य: । यतो हि उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये।

सुनील: - त्वं स्मरसि, केन सुवचनमिदमुक्तम् ?

देव: - न स्मरामि। किन्तु सर्वदा मम मनसि सूक्तिरियं सञ्चरते।

सुनील: - साधु। साधु। हर्षप्रकर्षं जातं तव दर्शनेन। कोऽपि नूतनो भावतरङ्ग: समजनि। चल वयमित्थं कुर्म:। प्रतिरविवासरेऽत्रैव मिलिष्याम:। शास्त्रार्थं करिष्याम:। तत्तु अस्माकं विकासाय सहायकं भवेत्। अस्तु, आगामनि रविवासरे पुनर्मिलिष्याम:।

देव: - अस्तु, शिवास्तु ते पन्थान: ।



# संलापः – ६

निर्मलः – महात्मन्। भवान् पुरुषोत्तमः। परमेश्वरस्य साक्षादवतार इति जनाः कथयन्ति। भवान् तत्त्वज्ञानी। चराचरजगतः सर्वं भवतां ज्ञानविषयः। तस्मात् त्रिकालदर्शी। ममास्ति काचित् समस्या। समाधानार्थं भवत्समीपमागतोऽहम्। भवन्तं विना नान्या गतिर्मम कृपया मार्गमादेशय। अन्यथाहं विनष्टो भविष्यामि। कृपया मामुद्धर। (चरणयोः पतति।)

योगेश्वरः – उत्तिष्ठ वत्स। उत्तिष्ठ। वद का ते समस्या?

निर्मलः – मम समस्या मम गृहम्। मम परिवारः। मम पुत्रस्तथा च मम पत्नी।

योगेश्वरः – ते किं कुर्वन्ति? तेषां का वा समस्या?

निर्मलः – ते सर्वे भोगविलासिनः। ते चिन्तयन्ति यत् सुखमस्ति भोजने, सुखमस्ति शयने, सुखमस्ति विभूषणे। सुखमस्ति धनव्यये।

योगेश्वरः – अहं बोधयामि –

आहारनिद्राभयमैथुनञ्च
सामान्यमेतत् पशुभिर्नराणाम्।
धर्मोऽपि तेषामधिको विशेषः
धर्मेण हीनाः पशुभिः समानाः ॥

ते सर्वे उपहसन्ति। कथयन्ति, एतत् सर्वं प्रलापमात्रम्। तेषामादर्शः –

यावज्जीवेत् सुखं जीवेत्
ऋणं कृत्वा घृतं पिबेत्।
भस्मीभूतस्य देहस्य
पुनरागमनं कुतः? ॥

किं करिष्यामि? गृहं मम न मन्दिरमस्ति, इदं तु शश्मानमिव मां प्रतिभाति।

निर्मल: - अरे मूर्ख। त्वं कथं क्रन्दसि। तव किं कष्टम् ? त्वं कथं वेदनाविकल: ? कथं चिन्तित: ?

योगेश्वर: - मया बहुकष्टेन धनमर्जितम्। जीवनं मम तपस्यारूपमासीत्। शरीरं मम साधनमासीत्। स्वर्गायिते गृहे मम जन्म। हरिपादसेवनमेवासीद् धर्म:। विज्ञानसंशोधनमेवासीत् मम कर्म। गृहं शान्तिनिकेतनमिवासीत्। शान्तिरासीदस्माकं परमपुरुषार्थ:। ब्रह्मायिते परमानन्दसदने मया जीवनेऽनुभूतं वैकुण्ठस्यामृतम्। मोक्षस्य मधु। ममतामन्दाकिन्या: सुधासैकतम्। हा हन्त ! अद्य सर्वं किन्तु विपरीतम्। सर्वं विखण्डितम्। सा प्राचीना परम्परा नाममात्रमवशिष्यते। सा गृहसंस्कृतिर्विधवेव रौति। विरूपेव विभाति गृहदेवता। विनष्टेव जाता मे मनोभूमि:। किं करणीयमिति चिन्तया तृणायितं जीवनम्। सम्मुखे यदा परम्परा विध्वंस्यते धैर्यद्रुमोऽपि विखण्ड्यते।

निर्मल: - अस्तु, चिन्तां परिहर। विषादं मुञ्च। धैर्यधना हि साधव:। विपदि धैर्यमावश्यकम्। वत्स, त्वं विवेकी, तवास्ति विचारशक्ति:। संसारे परिवर्तनमेव अनिवार्यसत्यमस्ति। समयेन साकं सर्वं परिवर्तते। कालेन साकं चलतीह मानव:। तस्मात् कदा कदा परिवर्तनं स्वतो भवति परम्पराया अङ्गीभूत:। अपरमपि कारणमस्ति यत् सर्वेषामत्रत्यानां लक्ष्यं न समानं भवति। कर्मानुसारं संस्कार: समुदेति। संस्कारानुसारं प्रचोदना भवति मानवस्य। संस्कारपिण्डं प्रवृत्तिमुत्तेजयति। इच्छानुसारिणी यस्य निकटे शक्तिरस्ति स स्वेच्छां नियन्त्रयति। य: शक्तिहीनोऽस्ति तमिच्छा नियन्त्रयति। दुर्बलो मानवो वासनाविदारितो भवन् भ्रमति। भ्रामं भ्रामं वस्तुसकलं पश्यति पशुवत्। पश्य, तेषां वस्तूनां प्राप्तिमोहजालेन निबद्धो भूत्वा आत्मनो मूललक्ष्यं विस्मरति। तस्य विस्मृतिस्तं पापपङ्के

विनिपातयति। यः पापपङ्के पतति तस्त नास्ति निस्तारः। अस्मिन् संसारे सर्वेषां विज्ञानोदयो महोदयो नापेक्षणीयः। कति संसारे भोगार्थं जन्म लभन्ते, कति पूनरुपभोगार्थमेव, कति सम्भोगार्थम्। परन्तु ते कदा आत्मानुसन्धानं कुर्वन्ति। कदापि ज्ञातुं न पारयन्ति - 'भोगा न भुक्ता वयमेव भुक्ताः'। अस्निन् संसारे अहं करोमीति वृथाभिमानः'। वत्स। भगवान् सर्वेषामन्तरे तिष्ठन् यथा यथोपदिशति तथा तथा करोति मानवः। यदि तव पुत्रो विपथगामी, यदि तव पत्नी चञ्चला, यदि तव कन्या पापाचारिणी तर्हि त्वं न तदर्थं दोषी। त्वं कथमात्मानं दण्डयसे? त्वं कथमपराधभावनां पोषयसे मानसे? इयं तव दुर्बलता। त्वं तव कर्तव्यं कुरु। तेन सुखमनुभव। प्रसन्नो भव। यतः कर्मण्येवाधिकारस्ते। तव पुण्यप्रभावात् तेऽत्र सुखेन जीवन्ति। तव धर्मस्य फलं तान् संरक्षते। तव परम्परा तेषां कवचमिव कार्यं कुरुते। याहि वत्स। गृहं याहि सन्तोषः परमो धर्मः।

योगेश्वरः - महात्मन्। अत्रागत्य सुखमनुभवामि, कोऽपि दिव्यावबोधो मां पोषयते। कापि कर्तव्यबोधभावना मां सुखयति। यद्यहमात्मानं समुद्धर्तुं भवेतम् तर्हि सर्वं प्राप्तं जीवने।

किं तया चिन्तया लोके
यया न हितसाधनम्।
किं तया मायया विश्वे
यया पुष्टं न जीवनम्॥

निर्मलः - अस्तु, अयं ममोपदेशः। त्वं तव विषये चिन्तय। तव कर्म चिन्तय। तव धर्मं चिन्तय। अत्रात्मनस्तु कामाय सर्वं प्रियं भवति। आत्मा तु अस्माकं लक्ष्यम्। 'नाल्पे सुखमस्ति'। भवद्भिः सत्यमुद्घाटितम्। उन्मोचितं मे नयनम्। जाग्रता मे नष्टचेतना। पलायितमज्ञानतमः। सत्यं सम्मुखे दण्डायमानमिव। तत्त्वसारः समुपालब्धः। अद्य प्रभूति अहं ममात्मानं चिन्तयामि। अस्मिन् क्षयशीले व्याधिवेदनाविदारिते शरीरे परमात्मनः संशोधनं करोमि। अद्य नष्टो मोहः स्मृतिलब्धा त्वत्प्रसादान्परन्तप।

# संलापः – १०

पिता – हे राम, परीक्षासमयः समागतः। सर्वं तव क्रीडाकर्म विहाय केवलमध्ययने मनो नियोजय। यदि वृथा कालक्षयो भवेत् तर्हि सर्वनाशो भवेत्।

रामः – पितः, त्वं सर्वदा ममाध्ययनविषये वदसि ? किमध्ययनं विहाय विषयान्तरं जगति नास्ति ?

पिता – अस्ति राम। परन्तु तेषां किं प्रयोजनम् ? अधुना तवाध्ययनस्य प्रयोजनमस्ति। यदा यस्य प्रयोजनं विद्यते बुद्धिमान् मानवस्तदा तत् करोति। तेन तस्य विकासो भवति। अन्यथा.....

रामः – अन्यथा किम् ?

पिता – अन्यथा ध्वंसमुखे।

रामः – पितः, समयः परिवर्तितः। अधुना जनाः किं प्रयोजनं तत्र चिन्तयन्ति। प्रयोजनस्य साधनविशेषं चिन्तयन्ति। येनानायासेन अल्पव्ययेन चित्तोद्वेगं विना कार्यसाधनं भवेत् तच्चिन्तयन्ति। अस्मिन् युगे श्रमं प्रति कस्यास्ति रुचिः? कर्तव्यनिष्ठां प्रति कस्यास्ति व्यामोहः ? सत् कर्म प्रति कस्यास्ति चिन्ता ?

पिता – राम ! त्वं कथमित्थं वदसि ? किं जातम् ? तव मनः परिवर्तितमिति मन्ये। तव विचारधारा कथं संकीर्णा जाता। तव निर्मलान्तःकरणे कथमपादर्शस्य बीजमङ्कुरितम् ? तव चेतनाजगति कथं तमस्तस्करः? अनेन विचारेण तव सर्वनाशो भवेत्।

रामः – पितः, क्रोधं न कुरु। सत्यमिदं यत् प्रायः सर्वे जनाः सफलतामनेन साधनेन लभन्ते। मम कथनं तु यथा सर्वे कुर्वन्ति वयमपि तथैव करिष्यामः। वयमतिपण्डिता इति प्रदर्शनस्यावश्यकता नास्ति। शास्त्रेऽपि कथितमस्ति – 'वर्तमानेन कालेन प्रवर्तन्ते विचक्षणाः'। कालानुसारं गमनं करणीयमेव। शास्त्रानुसारमाचरणीयमेव।

पिता – किं शास्त्रविषये त्वमधिकं जानासि ? शास्त्रं नाम गृहीत्वा यूयं सर्वे समाजे कलङ्कं प्रसारयथ। शास्त्रमित्थमुपदिशति। तस्य सुवचनस्य नायमर्थो यदालास्यपरायणः सत् कुकर्मकरणम्। कर्तव्यतां विस्मृत्य मूढानां मार्गानुसारं चलनम्। सत्यं परित्यज्यासत्यमार्गे धावनम्। धर्मस्य ग्रहणं कर्तव्यम्। किं तेन जीवनस्योन्नतिर्भवेत् ?

रामः – पितः, सत्येन कस्योन्नतिर्जाता ? सत्यं स्वीकृत्य राजा रामचन्द्रो वने भ्रमति स्म। सत्यमनुसृत्य राजा हरिश्चन्द्रः सुन्दरं जीवनं धूलीकृतवान्। महात्मागान्धिमहोदयः सत्यस्य परमपूजक आसीत्। किं प्राप्तं स्वजीवने ? अधुना जना निन्दन्ति। अद्य देशे यत् सर्वमनिष्टं घटते तस्य मूलं महात्मागान्धिना स्थापितमिति।

पिता – पुत्र, त्वमधुना बालः। तस्माच्चलः। तव मस्तकं न परिपक्वमस्ति। तव चित्तं जलबिन्दुवत्तरलमस्ति। हिताहितचिन्तने शक्तिर्नास्ति। परीक्षणस्य का कथा? अवश्यं समयो न समीचीनः। जना दूषिताः। प्रदूषितः समाजः। वातावरणमपि दूषितमस्ति। तस्मात् कोमला बाला विचलिताः। तेषामस्तकोपरि विषाक्तवायोः प्रखरः स्पर्शः। अस्मात् सत्यं प्रति न श्रद्धा, धर्मं प्रति अवमानना। आलस्यं प्रत्यनुरागः। अधःपतनं प्रति समुत्साहः। अन्धकारं प्रति स्नेहः। विनाशं प्रति वासना । कामं प्रति तपस्या। जीवनं प्रति औदासीन्यम्।

रामः – पितः। सर्वं सत्यम्। सर्वं सत्यम्। परन्तु अद्यतनः समाजः प्रदूषितः। जना नीतिभ्रष्टाः। दुर्नीतिपरायणाः शासकाः। नेतारो नियमान् निर्मान्ति, न किन्तु पालयन्ति। यथा ग्रामेषु तथा नगरेष्वपि भ्रष्टाचारपरम्परा प्रचलति। सरलाः शोषिताः। दुष्टा मदमत्ताः । धार्मिका दलिताः। ये योग्यास्ते न वृत्तिं लभन्ते। अयोग्याश्चाग्रेसरन्ति। इदं सर्वमस्माकं पुरतो भवति। तस्मात् हृदये क्रोधाग्निः। वयं सर्वं पश्यामः। किन्तु न किञ्चित् कर्तुं शक्नुमः। सर्वत्र मायाजालम्। चतुर्दिक्षुः बन्धनसीमा। प्रतिकोणं रणभूमिः।

पिता - राम। एतत् सर्वमहमपि जानामि। त्वत्तरधिकमपि जानामि। मया जीवनेऽनिर्वचनीयं दुःखं प्राप्तम्। असंख्या निर्यातना मयानुभूता। पापपङ्क्लियं पृथिवी। अत्र मनुष्यरूपेण मृगाश्चरन्ति। देवरूपेण दानवा विचरन्ति। अस्माकं रक्षका भक्षकाः। तथाप्यस्ति परमेश्वरः। सर्वं स पश्यति। योग्यकाले योग्यं फलमपि ददाति। तदा स्वतरमृतायते विषम्। वृक्षत्वमाप्नोति तृणम्। चन्दनायते बर्बुरः। गृहस्यान्धकाराच्छन्ने कोणे विद्यमानो विवर्णो निर्वाणदीपो हठात् प्रभामयो भवति। तदर्थमपेक्षते विश्वासः। विश्वासं विना श्वासोऽपि चलितुं न समर्थः।

रामः - पितः। तव सुवचने सत्यतास्ति। नाहं नाङ्गीकरोमि तव वचनम्। तवानुभवोऽस्माकं प्रमाणभूतः। तवोपदेशः प्रेरणास्रोतः। यद् भवानुपदिशति तत् सर्वं लाभदायकमस्ति। अहं भवतामुपदेशानुसारं कार्यं करोमि। ममान्धविश्वासो दूरं गतः। उन्मुक्ते मम नेत्रे जाते। समुदितो मे विवेकः। विमुक्तं च प्रज्ञाचक्षुः। भवद्भिः सह मया वृथा कृतर्कं कृतम्। तदर्थं क्षमां याचे। क्षन्तव्यो मेऽपराधः।
अधुनाहं संस्मरामि सुवचनमेकम् -

**माता भगवती साक्षात्**
**पिता च परमेश्वरः।**
**प्रसन्नौ यदि तौ नित्यं**
**झरति सुखनिर्झरः॥**

पिता - धन्योऽस्मि, धन्योऽस्मि। स्वर्गायितं मे सदनम्। उपवनायितं मे मनः। त्वं जानासि अपरमेकं सुवचनम्...

**यद्यस्ति गुणवान् पुत्रो**
**रत्नस्य किं प्रयोजनम्।**
**यद्यस्ति चन्दनं गेहे**
**भूषणैः किं प्रयोजनम्॥**

# संलापः – ११

माधवः – अये, कमलामातः। किं करोषि ? कुत्रासि ? अत्र क्षणमागच्छ।

मनोरमा – अहं कर्म करोमि। बहु कार्यमस्ति। वृथा मामाह्वय।

माधवः – अरे, जलमर्पय तृषार्तोऽहम्। कदाप्रभृति चीत्करोमि। न कोऽपि शृणोति ?

मनोरमा – कः श्रोष्यति ? कति सन्ति सेवकाः ? किं भवता जलग्रहणमपि न भवति? अतिदुःखदायकम्। सामान्यं कार्यमपि भवान् न करोति।

माधवः – किं न करोमि ? मम यत् कर्तव्यम् तत्तु करोमि। किं वयं सर्वे सेवकाः ? तव क्रीतदासाः ?

मनोरमा – अरे, त्वं तु सामान्यवचनं विस्तारयसि।

माधवः – अहं न विस्तारयामि। अहं सत्यं वच्मि। सत्यं तिक्तं भवति। न रोचते भवते जानामि।

मनोरमा – आम्, आम्, त्वं सर्वं जानासि। त्वं सर्वज्ञा। त्वं महामाया।

माधवः – वृथा भाषणं ददाति। न भाषणे कस्य रुचिः। स्वकर्म कुरु। तदेव पर्याप्तम्। मम कार्यं न वर्धय। अस्मिन् गृहे कार्यस्यान्तो नास्ति। श्वासमपि नेतुं न शक्नोमि भवादृशानां कृते।

मनोरमा – किं त्वं गन्तुं शक्नोसि। मया चोक्तं नु, यदि त्वया गृहस्य सर्वं कार्यं न भवति, तर्हि सेविकां रक्ष। त्वं कथं न करोषि तत् ?

माधवः – कथं करोमि ? सेविकारक्षणेनार्थव्ययो भवेत्। कार्यमपि शोभनं न भवेत्। विश्वासयोग्याश्च न मिलन्ति।

मनोरमा – सर्वं मिलति। प्रयत्नोऽपक्षते।

माधवः – त्वं कथं प्रयत्नं न करोषि ? वृथा भक्षयसे मम शिरम्। कार्यान्तरं पश्य।

मनोरमा – अरे, अहं कथं प्रयत्नं करोमि ? मां को जानाति ?

माधवः – किं येषां पत्न्यो न सन्ति ते एतादृशा कार्यं न कुर्वन्ति। मन्यतामहं मृता। नाहमस्मि। इत्थं विचार्य क्रियताम्। त्वं यदा मत्सम्मुखे तिष्ठसि, कथमहं विचारयामि – त्वं नासि। नाहं तादृशो मूढः।

मनोरमा – न, न, त्वं न मूढः। त्वं महाधूर्तः। विचक्षणः। सुखसाधनाय सर्वं कर्तुं शक्नोसि। वयं सर्वे मूर्खाः। अस्माकं जन्म अस्मिन् गृहे, मरणमपि गृहे। प्रातः सायं यावन्महादेवानां सेवा। प्रातश्चायमर्पय, जलाहारमर्पय, फलाहारमर्पय, तदनु भोजनं, इत्यादि। नास्ति शान्तिरस्मिन् गृहे। कथं कालो नायाति। मरणं न भवति। मरणेन सर्वेषां शान्तिर्भवेत्।

माधवः – तव विचारे अहं किञ्चिन्न करोमि। धनं कस्मादागच्छति। मम वृतिं किं त्वं करोषि ? त्वं जानासि, यत् सर्वं नाटकं प्रदर्शयसि तस्य सर्वस्य मूलं धनम्। अहं धनमर्जयामि। धनेन सर्वं कृतम्। गृहं निर्मितम्, सर्वेषां भरणपोषणं कृतम्। यानमानीतम्। वस्त्रभूषणादीनां न कुत्र न्यूनता। यावच्छक्यं मया सर्वं संसाधितम्। बहुश्रमः कृतः जीवने। बहु कष्टमङ्गीकृतम्। किन्तु हन्त जलमपि दातुं न कोऽपि तत्परः। शारीरिकं कष्टं भवति। कथ्यते-मया न किञ्चित् कृतम्। अयं ममापराधः।

मनोरमा – नहि नहि। न कोऽपि तवापराधः। सर्वं मम। अहं सर्वानर्थस्य मूलम्। अहं सर्वप्रदूषणस्य प्राणभूमिः। मया न किञ्चत् कृतम्। सर्वं स्वतो भवति। गृहमार्जनं स्वतो भवति, वस्त्रप्रक्षालनं स्वतो भवति। बालकानां लालनपालनं स्वतो भवति। पाचनकार्यं स्वतो भवतु। भवतु तर्हि। अद्यप्रभृति अहं किञ्चन्न करोमि। पश्यामि, कथं सर्वं भवति।

(इति उक्त्वा जलपात्रं नीत्वा जलमर्पयति)

माधवः - अनावश्यकम्, अनावश्यकम्। नास्ति तृषा। बहु पीतम्।

मनोरमा - अरे, नय, नय नु। क्रोधं प्रभो संहर संहरेति। जलं पिब। सर्वं सम्यग् भविष्यति।

माधवः - न पास्यामि। कदापि न पास्यामि। जलं विना किं मरणं भवति। भवतु मरणम्।

मनोरमा- तर्हि मम किं भवेत् ? अहं कुत्र यास्यामि ? कस्य श्रीमुखमवलोक्य जीवनं धारयामि ? कस्य सेवां कृत्वा कालक्षेपं करोमि।

माधवः - गृहकर्म कुरु। मम का आवश्यकता, अहं चलामि।

मनोरमा - कुत्र ?

माधवः - वृन्दावनम्।

मनोरमा - कथम् ?

माधवः - हरिनामामृताय। तत्रैव सुखमस्ति। नास्ति कस्य प्रयोजनम्। अद्य सर्वं त्यजामि। सर्वं वर्जयामि। संसारोऽयं मिथ्या, माया, छलना।

मनोरमा - अरे तिष्ठ, कुत्र यास्यसि ? इत्थं कथं यास्यसि ? अहमपि आगमिष्यामि त्वया सह। अहं तव सहधर्मिणी। एकाकिनी अहं किं करिष्यामि ? नय, जलं पिब (पिबति)



# संलापः – १२

मुकुन्दः – संसारोऽयं सुखमयः। नरजन्म दुर्लभं संसारे। यावज्जीवेत् सुखं जीवेत्। कामना सुखदायिनी। वासना विलासकारिणी। संभोगः परमपुरुषार्थः। शरीरं भोगमन्दिरम्। जीवनं क्रीडनम्। मनः संभोगसेतुः। यौवनादन्यदस्ति न महैश्वर्यम्। अत्रैव स्वर्गः, अत्र कामधेनुः, अत्रैव कल्पपादपः। वृथा मूर्खा भोगं त्यक्त्वा योगमाचरन्ति।

मधुपः – अरे मूर्ख ! संसारोऽयं दुःखमयः। दुःखस्य कारणं तृष्णा। तृष्णा नवयौवनसम्पन्ना तरुणीव सर्वदा समाकर्षति हृदयम्। नारी नरकद्वारम्। स्तनौ मांसग्रंथी। मुखं श्लेष्मागारम्। जघनं मूत्रक्लिन्नम्। रूपं पापस्य धूपमिव। अत्र गहनः मोहमहिमा। अत्र शलभः मोहस्य माहात्म्यं अजानन् दीपे पतति। मीनोऽपि अज्ञानात् बडिशयुतं पिशितं अश्नाति। अस्मिन् संसारे भोगे रोगभयं अस्ति। कुले च्युतिभयमस्ति। वित्ते नृपाद्भयमस्ति। रूपे जराया भयमस्ति। काये कृतान्ताद्भयमस्ति। सर्वं वस्तु भयान्वितमस्ति जगति। मोहं तस्मात् परित्यज्याभयं वैराग्यमेव समाश्रय।

मुकुन्दः – किं कथयति भोः। अस्मिन् संसारे जीवनं स्वर्णपादपः। अत्र मृगदृशः प्रेमप्रसन्नं मुखं द्रष्टव्यम्। तदास्यपवनः धातव्यः। तद्वचः श्रव्यम्। तदोष्ठपल्लवरस आस्वादनीयः। ताद्वपुः स्पृश्यः। नवयौवनं प्रतिपदं ध्येयम्।

मधुपः – अरे, पापात्मन्। अत्रायुः कल्लोललोलम्। यौवनश्रीः कतिपयदिवसस्थायिनी। भोगाः क्षणभङ्गुराः। अत्र जन्म मरणेनाघातम्। विद्युच्चलं यौवनं जरया घातम्। धनलिप्सया सन्तोषः समाघातः। अस्मिन् संसारे जनस्यारोग्यं विविधैराधिव्याधिशतैरुन्मूल्यते। यत्र लक्ष्मीर्वसति तत्र स्वयमेव

व्यापदः पतन्ति। अस्माकं पुरतो जरा परितर्जयन्ती व्याघ्रीव तिष्ठति। शत्रव इव रोगाः प्रतिपदं देहं प्रहरन्ति। शनैः शनैरायुः परिस्त्रवति। गात्रं संकुचितं भवति। गतिर्विगलति। दन्तावलिः भ्रस्यन्ति। दृष्टिर्नश्यति। बधिरता वर्धते। चन्द्रविकासि मुखं लालायते। यौवनं कुसुमसौरभमिव धुलिधूमे मिश्रति। सुखं कुत्र?

मुकुन्दः - नहि नहि। सर्वं भवतां विचारोपरि निर्भरयति। यथा दृष्टिस्तथा सृष्टिः। अस्मिन् संसारे बधूनामधरमधु भाग्यवन्तः पिबन्ति। ये जघनसंस्पर्शसुखं न प्राप्नुवन्ति ते तन् निन्दन्ति। येषां साहसो नास्ति, शक्तिर्नास्ति, वित्तं नास्ति, सामाजिकी प्रतिष्ठा नास्ति, ते मात्रं हरिनामकीर्तनं कुर्वन्ति। अवाच्यवचनमुक्त्वा भयमुत्पादयन्ते। स्वकातरतां संगोप्य वीरा इव व्यवहरन्ति। शूरा इव संसरन्ते। धीरा इव प्रधावन्ति। वानरा नरा इव नृत्यन्ति। कातराः कमण्डलुं धृत्वा संसारस्य सौन्दर्यं संवर्धयन्ते। अत्र सर्वत्र सुखमस्ति। पुष्पं पश्य, सौरभं पश्य, उपवनं पश्य, पवनं पश्य। सर्वत्र सौन्दर्यस्य सौदामिनी नरीनृत्यते। सर्वत्र प्रकृतिरमणी असीमां रमणीयतां स्वकरे निधाय वीरमाह्वयति। कथयति वीरभोग्या वसुन्धरा धीरभोग्या वनस्थली।

मधुपः - रे रे अधम, विचारमूढ। सनातनसत्यं त्वं निन्दसि। ऋषिवचनमसत्यमिति घोषयसे। मायामृगं विलोक्यान्धो भवसि। रूपलावण्यं हरति ते हृदयम्। त्वमसंयतः। त्वं नरपशुः। अहं त्वया सह कलहं कर्तुं नागतः। त्वं पतङ्ग इव पत। कीट इव रट। चटक इव चट। नट इव नृत्यताम्। अहं कल्पवटं प्रति गच्छामि। अमृतं यत्रास्ति अविनश्वरः। सुधासिन्धुः यत्रास्ति।



# संलापः – १३

काकः – हे पिक! का वार्ता? कथं मौनव्रतमाचरसि? किं जातं तव?

पिकः – काकभ्रातः? किं करोमि? कार्ये मनो न लगति। अस्मिन् युगे सहृदया न सन्ति। आजीवनं मया साहित्यसाधना कृता। किं प्राप्तम्? सुखं त्यक्तम्। धनं व्ययितम्। परन्तु फलं किम्?

काकः – मयोक्तं प्रागेव। एतेषां कार्याणां मूल्यं नास्ति। किं प्रयोजनमेतेषाम्? अनेन समाजस्य को लाभो भवति? तादृशं कर्म कर्तव्यं येन समाजस्य चरमो लाभो भवेत्। जना उपकृता भविष्यन्ति। यदि जनानामुपकारो शारीरिको मानसिको वा भवेत् तर्हि ते तव सम्मानं करिष्यन्ति। तव गुणगानं करिष्यन्ति। तव विद्याया महत्त्वमवगमिष्यन्ति। तव साधनाया मूल्यं तदा विज्ञायते यदा सा साधना कस्योपकारिणी। कस्य सुखदायिनी। कस्य चित्तप्रसादिनी भवेत्।

पिकः – सत्यं, सत्यम्। मया तदेव कृतम्। मया चिन्तितं, साहित्यमावश्यकम्। अस्माकं देवभाषा संस्कृतभाषा शनैः शनैरपक्षीयते। अस्माकं शात्राणि त्यज्यन्ते। अस्माकं धर्मधारा न पूज्यते। तदर्थं मया कठिनं श्रमं कृतम्। सेवा कृता। ईश्वरदत्तप्रतिभायाः सदुपयोगः कृतः।

काकः – अरे मूढ! सेवया किं भवति? पश्य, अहमपि सेवां करोमि। देशसेवां करोमि। जनसेवां करोमि। जना दुस्थाः। दुःखिताः। भाग्यविषये ते न जानन्ति। भविष्यद्विषये ते अनभिज्ञाः। ते ज्ञातुमिच्छन्ति तेषां भाग्यविषये। तेषां लाभहानिविषये। अहं तान् सुमार्गं दर्शयामि। अनेनार्थागमो भवति। आनन्दोऽपि। इयमेका साधना।

पिकः - अवश्यम् अवश्यम्। साधनां विना सिद्धिः कुत्र ? भवतां प्रसिद्धिरस्ति। भवतां नाम जनमुखे समुद्घोष्यते । अहं तादृशमुत्तमं कर्म करोमि। मया शास्त्राणि साङ्गोपाङ्गमभ्यस्तानि। वेदाः कण्ठस्थीकृताः। मन्त्राः सनिष्ठं साधिताः। साधनाबलेन दैवीप्रज्ञा संप्राप्ता। ब्रह्मनिर्वाणमपि लब्धम्। अधुना यत्कथयामि तत् सत्यं भवति। मम संस्पर्शेण रोगिणो रोगमुक्ता भवन्ति। भोगिनो भोगविलासिनो भवन्ति। अधुनाहं मन्त्रद्रष्टा।

काकः - किमद्भूता विद्या भवद्भिः प्राप्ता ?

पिकः - आम्। अद्भूता। अपूर्वा। असामान्या। अहं तया त्रिकालदर्शी। सत्यज्ञानमनन्तरूपं ब्रह्मसाक्षात्कारं करोमि प्रतिक्षणम्। जनस्य मुखमण्डलं पश्य तस्य सर्वं भूतं भविष्यं वर्तमानञ्च ज्ञातुं शक्नोमि।

काकः - इदं सर्वं कथं सम्भवेत् ? अहं चिन्तयितुमपि न शक्नोमि। एषा विद्या मम साध्या।

पिकः - सत्यम्। सामान्यानां कृते नेयं विद्या। एतदर्थं गुरुरावश्यकः। गुरुं विना साधना न सिध्यति। आराधना न परिसमाप्यते। पूजा न पूर्णतामेति। भावना न भव्या भवति। जीवो न शिवो भवति। चैतन्यं न चकचकायते। मनोरथा न फलन्ति।

न बोधनं न शोधनं धनायितं न जीवनम्
न जीवने सुखायनं गुरोर्यदा न वन्दनम्।
न साधना गुरुं विना न साधनं धनं विना
न शोभते वसुन्धरा गुरुं विना तरुं विना।



# संलापः – १४

माला – नमस्ते मलय।

मलयः – नमस्ते माला।

माला – किं कारणम् ? कथमहं समाहूता ? स्थानमिदं न शोभनम्। अत्र मां विलोक्य जनाः किं चिन्तयिष्यन्ति ? त्वरितं कथय किं तव कथनीयमस्ति। यदि कोऽपि मां...

मलयः – कथं वृथा चिन्तयसि ? स्थिरा भव। मन्निकटमागच्छ। तव व्यवधानं मां बाधते। यदा त्वं निकटे तदा स्वर्गसुखमनुभवामि। यदा दूरे तदा नरकायितं मनः। जानासि तस्य कारणम् ?

माला – अहं किञ्चिन्न जानामि। शीघ्रं गच्छ। कथय मां किं त्वं कथयितुं कामयसे। अन्यथा अहं गच्छामि। त्वमत्र एकाकी स्थित्वा स्वर्गसुखमनुभव।

मलयः – अरे माले, त्वया विना कुत्र सुखम् ? त्वया विना कुत्र माधुर्यम् ? त्वया विना सर्वमन्धकारः। सर्वं शुन्यमिव।

माला – मलय ! त्वमुन्मत्तवत् कथं प्रजल्पसि। किं ते जातम् ? चञ्चलं ते हृदयमन्यस्मिन् कार्ये निवेशय। अन्यथा सर्वनाशो भवेत्।

मलयः – यत् किमपि भवतु नास्ति तस्य चिन्ता। मम मनो न कुत्रापि लगति। शयने स्वप्ने जागरणे च त्वं दृश्यसे। तव मुखकमलं दोलायते नेत्रसमीपे। हृदये मम प्रवहति तव कृते स्नेहनिर्झरः। अहं त्वां प्रीणामि। अहं त्वां कामये।

माला – अरे मलय ! कथमित्थं जल्पसि। तव विद्यायां मनो नास्ति। अध्ययनमत्यावश्यकम्। अध्ययनं विना किं भवेत् ? अस्मिन् वयसि सर्वं सुखमिव प्रतिभाति। पश्चाद् दुःखं मिलति। अधुना सर्वमेतत् परिहर। वृथा कालव्ययो नोचितः। सर्वं तव नक्ष्यति।

मलयः - जाने, सर्वं जाने। अहं किं करोमि ? त्वां विलोक्य विमुग्धो भवामि। तव संगः शीतलयति मम सन्तापम्। तव स्पर्शो रसयते मम तनुश्रियम्। तव कामकला गिलति चेतनाचन्द्रिकाम्। समुद्रायते तृषा। आशायते तव बाहुबन्धनम्। धनायते स्वहृदये कामना।

माला - अस्तु, अस्तु। अधिकं न कथय। अहं गच्छामि। मम समयो नास्ति।

माला - माले। क्षणं चिन्तय। प्रसन्ना भव। त्वया विना नान्यां पश्यामि। त्वया विना नान्या मम प्रणयिनी भवितुमर्हति। त्वां यदा पश्यामि ज्वलति मे मनः। तपति हृदयं सन्तापविशिखैः। कथमहं न जानामि। अनुभवामि कठिनज्वलनम्। भाराक्रान्तं भवति शरीरम्। रोगजर्जरं भवति स्नायुशिल्पम्।

मलयः - यद् भवतु। एषा समस्या तव। अहं किं करिष्यामि ? अहं विद्यालयमध्ययनाय आगच्छामि। विद्यार्जनं मम कर्तव्यम्। मम जीवनं मूल्यवान् वस्तु। मम पिता कष्टं कृत्वा मां विद्यालयं प्रेषयति। मम माता गृहे सर्वाणि कार्याणि करोति। सर्वेषां मदुपरि विश्वासो विद्यते। अहं कुपथगामिनी न भविष्यामि।

माला - अरे माले, प्रणयनं न कुपथगमनम्। प्रणयः, सत्यं, शिवः, सुन्दरः। प्रणयेऽस्त्यमृतम्। प्रणयेऽस्ति जीवनस्य सुखशिल्पम्। प्रणयं या निन्दति सा पापिनी।

मलयः - भवतु। अहं पापिनी। अहं कलङ्किनी किन्तु भवितुं नोत्सहे। मम चरित्रं मम सम्पत्तिः। प्रेमपङ्के पतितुं नेच्छामि। कुत्र अवितथं प्रेम। प्रेमनाम्ना व्यभिचारः। प्रेमनाम्ना पाशविकता। प्रेम आत्मिकसम्बन्धः, न तु शारीरिकः। शरीरजं तापो न प्रेमजनितं तत्तु कामजनितं भवति। कामः कालानलः। स सन्तापयति च । मानवे पशुत्वं प्रक्षिपति। मानवत्वं हरति। पशुत्वं विस्तारयति। दुर्बलमानसं विदलति कामदानवः । अतः कामक्रीडा न सुखदायिनी। कामी

हिताहितं न विचारयितुं शक्नोति। हानिलाभौ न चिन्तयति। गुणदोषौ न विचारयति। कामविकारा विवेकमुच्छेदयन्ति। उन्मूलयति वासना मानवताम्। तस्य प्रेम्ण: प्रतापेन मानवो नष्टो भवति। भ्रष्टोऽपि भवति।

माला - अस्तु। अधुना सत्यं प्रतीयते। क्षणमात्रं मम दृष्टिस्तमसाच्छन्ना अभवत्। अहमसुन्दरं सुन्दरमिति मत्वा प्रमत्तोऽभवम्। तव यथार्थवचनेन ज्वरो मे व्यपगत:। अहमपि पथभ्रष्टो न भवामि। गृहस्य दायित्वं मयि न्यस्तमस्ति। अहं स्वशरीरे तं कामकीटं मर्दयामि। आत्मानं तस्य कवलादुन्मोचयामि। माले, त्वं मम आदर्शरूप:। प्रभावितोऽहं तव सुविचारप्रभावेण। त्वत्सदृशा: सर्वे न भवन्ति। परन्तु आजीवनं अहं तवानुरागी भविष्यामि। विद्यार्जनं कृत्वा महान् भविष्यामि। प्रदीपयामि गृहगौरवम्। समाजे प्रतिष्ठितो भूत्वा धनमर्जयामि। तेन धनेन निर्मामि सुन्दरमेकं सदनं तव प्रणयस्मृतौ। तस्मिन् मन्दिरे संस्थापयामि सानन्दं त्वां मम जीवनप्रतिमाम्। इयं मम प्रतिज्ञा।

मलय: - अहमवश्यं तव सहधर्मिणी भविष्यामि। चल। स्थानं त्यज।

माला - चलाम:।



# संलापः – १५

भक्तः - हे परमेश्वर, हे पतितपावन, हे दीनबन्धो ! त्वमन्तर्यामि। त्वमभयवरदः, अन्ते सर्वं विहाय तव शरणं गच्छामि। मां शरणागतं रक्ष। मम पापतापं परिहर। मम दुःखं विनाशय।

भगवान् - हे भक्तवर, प्रीतोऽस्मि तव भक्तिभावेन। प्रसन्नोऽस्मि तव पूजाकर्मणा। अहं तव दुःखस्य कारणं जानामि। तव यन्त्रणा अतिसामान्यास्ति। त्वं संसारस्य जन्ममृत्युजराव्याधिप्रबन्ध–परम्परामवलोक्य व्यथितः। त्वमेव तव सन्तापकारणम्। कुचिन्तां त्यज। सानन्दं भज मम नाम। निर्भयो भव। यत्र जन्मास्ति तत्र मरणमस्ति। यत्र शरीरमस्ति तत्र रोगाः सन्ति। यत्र सुखमस्ति तत्र दुःखमस्ति। अधिकं न विचारय।

भक्तः - हे भगवन्! अस्थिरं मे मनः। निर्बोधो मे हृदयम्। वासना वसति मे हृदये। तृष्णातरुः मामाकर्षति। सत्यं जानन्नपि अस्थिरमार्गमनुसरामि। धर्ममवबोध्य धर्माचरणाय तत्परो न भवामि।

भगवान् - इत्थं न केवलं तवैव भवति। सर्वेषां जनानामित्थं भवति। सर्वेषां जनानां हृदयेषु विवेको विद्यते। सर्वे ज्ञातुं शक्नुवन्ति किं सत्यं किमसत्यम्। को न्यायः, कोऽन्यायः। किमुचितं किमनुचितम्। सर्वेषां हृदये विद्यमाना अनन्तशक्तिशालिनी बुद्धिः सर्वं सूक्ष्मतत्त्वं प्रदर्शयति। सा हितकर्मणि प्रेरयति किन्तुदुष्टोऽस्ति मनः। तत् सर्वं नियन्त्रयति। सर्वान् कबलीकरोति। समग्रं विश्वं स्वस्वार्थाय विध्वंसयति। जनास्तदनुसारं चलन्ति।

भक्तः - हे भगवन्, तदहं जानामि। जानाम्यहं मम दुर्बलताम्। मम शक्तिरसीमा। मम साहसो न सुदृढः। ममात्मबलः ससीमः। इन्द्रियाणि स्वेच्छाचारिणः। कपटकूटिलानि तानि मां मुह्यन्ति।

मम बुद्धिवैभवं हरन्ति। मम चैतन्यं प्रहरन्ति। अतोऽहं निरुपाय:। अतोऽहं कातर:। नास्ति सत्कर्मणि स्पृहा न वा मोक्षमार्गे प्रवृत्ति:।

भगवान् - हे भक्त, इदं नोचितम्। कातरतां त्यज। "नायमात्मा हीनबलेन लभ्य:।" आत्मबलं सर्वबलात् प्रधानम्। आत्मशक्तिरावश्यकी। आत्मशक्त्या सर्वं सिध्यति। तदर्थं विश्वास आवश्यक:। आशा न तृष्णापदवाच्या। आशा न कामनाकवलिता। शनै: शनैराशाबीजमङ्कुरय। विश्वासजलेन तत् प्रतिक्षणमुज्जीवय। सन्तोषपवनेन त्वं तत् संवर्धय। मम भक्तिभावसहयोगेन तत् संरक्ष। तव यन्त्रणाज्वरमनया महौषध्या दूरं यास्यति। कातरता तृणमिव क्षणिके भस्मसाद् भविष्यति।

भक्त: - हे प्रभो! दयानिधे! अहमवश्यं तत्करोमि। मम सर्वां शक्तिमस्मिन् कर्मणि नियोजयामि। यावत्कालपर्यन्तं भवतां साक्षात्कारो नासीत् तावत्कालपर्यन्तमासीद् हृदये कातरता। अधुना सा डाकिनी निर्गता। भयभूतोऽपि निर्गत:। शरीरे प्रसन्नताया नूतनं भावतरङ्गमनुभवामि। लुक्कायितमलौकिकं किञ्चिदुद्भवति शरीरे। अदृश्यं किञ्चिद्दृष्टिगोचरं भवति। असम्भव: सम्भवतीव प्रतीयते। अस्पृश्यं किमपि मां स्पृशति। अचिन्त्यं किमपि मां चुम्बति। अरूपं रूपायते। निरसो रसायते। पश्यामि विश्वेश्वरविश्वरूपम्। क्व गता वेदना? क्व गता भयव्याधि:? क्व गत: क्षयक्षोभ:? अधुनाहं प्रसन्न:। अधुना विजयी वडवानल:।

भगवान् - हे भक्त, त्वं वृथा कातरोऽसि। तव विज्ञानं विशुद्धं नास्ति। तव चैतन्यं मायाच्छन्नमस्त्रि। तव मनो विकृतमस्ति। तव नयनं घनान्धकाराच्छन्नमस्ति। तव प्राणपिञ्जरे लोभमोहकामक्रोधा: क्रीडन्ति। तव मनोभवने धनायितं पाप। तव अन्त:करणे कर्षति मोहकर्षक:। तवाहंकारकन्दरे निवसन्ती भोगभावना लोभातुरा। शरीरं ते कामकुसुमप्रणयी। सुखं कथमागच्छेत्?

भक्तः - हे भगवन्, अधुना समस्ततत्त्वं परिष्कृतम्। मया मात्रं शास्त्रमधीतम्। ज्ञानमर्जितम्। नानुभूतं किञ्चित्। पुस्तकज्ञानं नोपकारकमासीन्मम। गुरुर्न मार्गदर्शकः। अदृश्यं को दर्शयितुं शक्नोति। को वर्णयितुं शक्नोत्यवर्णनीयं तस्मादनुभवः श्रेयान्। अनुभूतिः प्रमाणम्। अपरोक्षानुभूतिरियं मार्गदर्शिका। दृष्टे मार्गे नाकर्षति मरीचिका। न चुम्बति चन्द्रिका। न मोदते मृद्विका। न दहते दहनम्। न विभाति गगनम्। शून्ये सञ्चरति स्नेहसुन्दरता। दृश्यायिता भवति चादृश्यतारका। रसना न रसातुरा, वासना न विवसना यत्र तत्रागच्छति स्वयमेवाहमस्मि स्रोतः।

भगवान् - हे भक्त, अधीरो न भव। बधिरो न भव। भव त्वं सदा सुमधुरो मम करुणया। त्वया सह सदास्ति मे कृपा।

भक्तः - हे भगवान्! क्वासि? क्वासि? किं किञ्चिन्न दृश्यते। किचिन्न चिन्त्यते? किमभवत्? किमभवत्?



# संलापः – १६

आत्मा – अहमजरः, अहममरः, अहं जीवः, अहं शिवः, अहं ब्रह्मा, अहमात्मा, अनादिः, अनन्तः, अखण्डः अभेद्यः। अतोऽहं महान्, अणोरणीयान्।महतो महीयान्।

शरीरम् – किं वदसि ? कथं वृथा प्रजल्पसि। तवास्तित्वं प्रमाणयितुं न त्वं समर्थः। मया त्वं शोभसे। मया त्वं जीवसि। मया त्वं श्वासं नयसि। ममेन्द्रियाणि तव सेवकाः। मम मनस्त्वदर्थं कार्यं करोति। अहं तव भारं वहामि।

आत्मा – अरे मूर्ख ! कथं न जिहेषि। कथं स्वाभिमानं न जहासि ? त्वं जडः। तावत्कालपर्यन्तं त्वं द्योतसे यावत्कालपर्यन्तमहमस्मि। तावत्कालपर्यन्तमहं तवाश्रयं नयामि यावत्कालपर्यन्तं त्वं न जीर्णम्, न प्रदूषितम्, नाक्षमम्। त्वं यदा विकृतो भवसि त्वरितं त्वामहं त्यजामि।

शरीरम् – त्वं कृतघ्नः। परोपकारं न स्मरसि ? ममाश्रये तिष्ठसि, परन्तु मां निन्दसि। मम साधनानि व्यवहरसि किन्तु ममोपकारभारं न स्मरसि। त्वं मम नेत्राभ्यां पश्यसि, मम त्वचा स्पृशसि। मम घ्राणेन जिघ्रसि। मम वाचा वदसि। मम गात्रं प्रतिक्षणमाश्रयसे। अहमुदासीनः। नास्ति मम भोगशक्तिः। अतस्त्वं भोक्ता। त्वं कर्त्ता।

आत्मा – किन्तु त्वं विस्मरसि भ्रातः, कः पश्यति ? कः स्पृशति ? केन नयनं द्रष्टुं पारयति। केन वदनं सुन्दरतां भजते। केन गगनो दृष्टिगोचरो भवति। केन कान्तिमयास्तवावयवाः। केन त्वं लावण्यमयम्।

शरीरम् – अहं सर्वदा यत्नशीलः। सर्वदा स्वरूपं मार्जयामि। तदर्थं सुन्दराणि वस्त्राणि चानयामि। स्वादिष्टं भोजनं करोमि। व्याधये औषद्यं सेवे। तस्य संरक्षणाय विश्रामं करोमि। यथा शीघ्रं जीर्णं न भवेत् तदर्थं नवनवानुपायानुद्भावयामि। यत्नेन, रत्नेन, योगेन, भोगेन,

वैभवेन, वित्तेन, विलासेन चाहमात्मानं संवर्धयामि। संतोषयामि। जीवयामि।

आत्मा - अरे, एतत् भवति सर्वं मत्प्रभावाद् भवति। धनागच्छति यावदहमस्मि। मनो नृत्यति यावदहमस्मि। सुन्दरीयते धरा यावदहमस्मि। विलासवसन्तेन सदनं ते शोभते यावदहमस्मि। यदाहं दूरं गच्छामि त्वं मृतो भवसि। अस्थिपिञ्जरं तव तदानीमेव विनश्यति। तव कंकालं विना विलम्बं गलति। तव रक्तं शीतलजलमिव भवति। तव मांसादुर्गन्धं निर्गलति। त्वं भूतायसे। त्वं प्रेतायसे। त्वां तदानीं तृणवज्ज्वलयन्ति जनाः।

शरीरम् - अरे, अस्मिन् नूतनं किमस्ति ? संसारोऽयं क्षणभङ्गुरः। न कोऽप्यविनश्वरः। पदार्थाः क्षणिकाः। अस्थायिनी शोभा। अनित्यं वस्तु। अलिका क्षणस्थायिनी सौदामिनी चञ्चला। यौवनमस्थिरम्। सौरभं क्षणिकम्। तथैवाहम् योऽत्र जन्यते सोऽत्र म्रियते। यः प्रादुर्भवति स नश्यति। य उत्पद्यते स क्षीयते। अयं संसारः। जन्ममृत्युजराव्याधिवलये विलसन्ति वस्तूनि। मायामये मोहगर्ते निपतन्ति पदार्थाः। शून्यायते सदनम्। सरणीयते श्मशानम्। सुन्दरं सीदति। बन्धनं भिद्यते।

आत्मा - त्वं यद्येतत् सर्वं जानासि कथं तर्हि अभिमनुसे ?

शरीरम् - नाहमभिमानं करोमि। अभिमानकरणस्य शक्तिर्मम नास्ति। अहं जानामि मम सीमानम्। जानाम्यहं मम दुर्बलताम्। अतो मम सिद्धान्तः -'यावज्जीवेत् सुखं जीवते्।' जीवनं यत् प्राप्तं तदमूल्यमस्ति। दुर्लभमस्ति। तस्मात् क्षणमत्र महत्त्वपूर्णम्। जीवनमत्र धनम्। शान्तिमयं सुखं भोक्तव्यम्। सुखमया भोगा भोक्तव्याः। सुरा न सेवनीया। यतः सा हानिं करोति पश्चात्। किन्तु घृतं पानीयम्। यतो तद् ददाति तेजः।

आत्मा -शोभनम्, शोभनम्।

# संलापः – १७

धर्मः – अहं धर्मः। मम नाम सुविख्यातं विश्वे। पुरुषार्थेषु मम नाम प्रथममागच्छति। मां विहाय संसारे स्थातुं न शक्नोति मानवः। जीवितुं न शक्नुवन्ति जनाः। अहं सर्वं धरामि। मम लक्षणं सविशदं वर्णितं मनुना वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः। एतच्चतुर्विधं प्राहुः साक्षाद् धर्मस्य लक्षणम्। अहं सुखस्य मूलम्। अहं सन्तोषस्याधिपतिः। अहं प्रसन्नतायाः प्रतीकम्।

अधर्मः – अरे, त्वामात्मानं बहु मन्यसे। त्वमधुना जराजीर्णः। शिरस्ते पलितम्। दन्तास्ते गलिताः। तव केशा धवलाः। तव चर्म शिथिलम्। त्वं निष्क्रियः। अहमधुना सम्राट्। अयं कलियुगः। कलिकालो मम मित्रम्। अहं यथेच्छामि तथा करोमि।

धर्मः – सत्यं वदसि त्वम्। अधुना त्वं प्रभावशाली। महाप्रतापी। कलिकालबलेन त्वं बलीयान् यथा कीचकबलेन विराटः। अतो जनास्तव मार्गमनुसरन्ति। तवादर्शेणानुप्राणिताः सन्तः सञ्चरन्ति कीटा इव भूतले। न्यायमार्गं त्यजन्ति। सत्यं विस्मरन्ति। नीतिं त्यजन्ति। मोहमदिरां पिबन्ति। सदाचारं विहाय भ्रष्टाचारं कुर्वन्ति। तव कुप्रभावेण जनाः शोषिताः। न्यायो धर्षितः। साधवः प्रपीडिताः। पण्डिताः सन्तापिताः। सरला दण्डिताः। शासका भ्रष्टाचारिणः।

अधर्मः – अस्तु, अस्तु, बहुभाषणस्यावश्यकता नास्ति। यो दुर्बलः स सर्वदा इत्थं वदति। यः पराजितः स सर्वदा विजयीं निन्दति। यः कातरः स पौरुषाकारं न सहते। य पश्चादस्ति स अग्रगामिनं नोत्साहते। यः प्राप्तुं न शक्नोति स निन्दति तद् वस्तु। अहं न कातरः। अहं किञ्चिदपि न श्रोष्यामि। सहस्रा मम अनुयायिनः। लक्षलक्षा मम सेवकाः।

धर्मः – त्वं विश्वं ध्वंसपथे गमयसि।

अधर्मः – तर्हि त्वं किं करोषि ? यदि तव शक्तिरस्ति तर्हि अस्माकं मार्गरोधं

कुरु। यदा तव समय आसीत्, सत्ययुगं आसीत्, त्वया किमधिकं कृतम्। तस्मिन् समये रावणोऽपि आसीन् मम विश्वस्तो भक्तः। अपहृता तेन सीता।

धर्मः - परन्तु फलं कुकर्मणः किं तेन न प्राप्तम् ? गता क्षणिके तस्य स्वर्णलङ्का। महापराक्रमी त्रिभुवनविजयी रावणः ध्वस्तः। सत्यव्रतेन विभीषणेन सत्कर्म कृतम्। तस्मादद्यापि स जीवति।

अधर्मः - स जीवतीति किं प्रमाणम् ? एतादृशी काल्पनिकी कथा अर्थहीना। अस्मिन् समये न कोऽपि श्रोष्यति। कथं श्रोष्यन्ति ते ? ते जानन्ति 'शरीरमाद्यं खलु धर्मसाधनम्'। शरीरार्थं सुखमावश्यकम्। वित्तमावश्यकम्। प्रासादमावश्यकम्। मन्दिरे भजनं कृत्वा किं प्राप्तव्यमस्ति ? वृन्दावने गर्जनं कृत्वा किं प्राप्तव्यमस्ति ? गङ्गायां स्नानं कृत्वा किं लभ्यते ? श्रीक्षेत्रे भ्रमित्वा किमधिगम्यते ? भज गोविन्दं, भज गोविन्दमिति भजन्तः प्रमत्ता मानवाः किं सुखमिति जानन्ति ?

धर्मः - ते जानन्ति। तत् यत् परिणामेऽमृतोपमम्। फलं यस्मिन् दुःखदायकं तस्मिन् कर्मणि सुखं कुत्र ? सुखं न भोगे। सुखमस्ति त्यागे, सुखमस्ति वैराग्ये। सन्तोषः परमं धनम्। सदाचारः तपः। सत्कर्म पुरुषार्थः। सद्विद्या मोक्षदायिनी। सद्भावना सुखदायिनी।

अधर्मः - प्रथमे मया उक्तम्। भाषणं न ददातु। भाषणमाभरणमिव भवादृशा- नाम्। भवन्तः सर्वे वाक्यवीराः। भाषणेन वञ्चयसि जनान्। मन्त्रेण वञ्चयसि। तन्त्रेण वञ्चयसि। न कोऽपि धार्मिकः। सर्वे प्रवञ्चकाः। प्रतारकाः। आलस्यपरायणा न किञ्चित् कर्तुमिच्छन्ति। त इच्छन्ति, धनमर्जयित्वा सभक्तिकं मामर्पय। अहं मन्दिरं निर्मापयामि। अहं ताण्डवनृत्यं करोमि।

धर्मः - अरे! कथमित्थं वदसि ? शास्त्रे किं लिखितमस्ति।

अधर्मः - तव शास्त्रं धिक् !

धर्मः - अहं क्षणमात्रमत्र तिष्ठामि। वर्धतु पशुता, नश्यतु मानवता। धरा यातु रसातलम्। पापरोगिणी भवतु वसुन्धरा मम का हानिः ? मम संस्थापनाय कोऽपि महात्मा नूनं धरापृष्ठमागमिष्यति।

# संलापः – १८

रमेशः –अद्याध्ययने कथं मनो न लगति। हृदयं व्यथते। कस्मिन् विषये स्थिरं न भवति मनः। अव्यक्ता यन्त्रणा चानुभूयते। किं कारणं तदपि ज्ञातुं न शक्नोमि।

सुरेशः – अहं सर्वं जानामि। तव वेदनाकारणमपि जानामि। तव चित्तं कथं चञ्चलं तदपि जानामि।

रमेशः – किम्? किम्? कथय, कथय।

सुरेशः – न कथयिष्यामि।

रमेशः – कथम्?

सुरेशः – अप्रियसत्यं न वदेयम्।

रमेशः – अत्राप्रियं किमस्ति? भवद्भिर्यत् कथ्यते तत् सर्वं मम प्रियं भवति।

सुरेशः – अथ किम्? अहं न जानामि।

रमेशः – ज्ञातुं तव समयः कुत्र? त्वं कर्मणि व्यापृतोऽसि। अस्तु, कथय, किं कारणमस्ति?

सुरेशः – अधुना त्वं प्रेमरोगी।

रमेशः – अहं प्रेमरोगी? किं वदसि?

सुरेशः – सत्यं वदामि। सर्वं प्रेमरोगस्य लक्षणं त्वयि दृश्यते।

रमेशः – त्वमित्थं वदसि यथा त्वं प्रेमरोगविशेषज्ञः। लक्षणशाश्त्रस्याध्येता।

सुरेशः – अहं न विशेषज्ञः। मया प्रेमरोगविषेये सम्यग् नाधीतम्। ज्ञानं मम सीमितमस्ति। परन्तु प्रेमरोगस्य सामान्यलक्षणविषयेऽहं सुपरिचितः।

रमेशः – भवतु, कथय, कानि च तानि सामान्यलक्षणानि। अहमुत्सहे ज्ञातुं तेषां विषये। संवर्धते मम श्रद्धा तदर्थम्।

सुरेशः – तव श्रद्धा कथं वर्धते? कथं त्वं समुत्साही दृश्यसे? अस्ति किं विशेषकारणमस्य?

रमेशः – विशेषं किमपि नास्ति। यथा त्वं तथा चाहम्।

सुरेशः - परन्तु, मित्रवर, कारणं विना कार्यं न भवति। यत्र यत्र कार्यं तत्र तत्र कारणम्। यत्र यत्र धूमस्तत्र स्तत्र वह्निः। कार्यात् कारणमनुमीयते। कारणात् कार्यमुत्पद्यते। कारणेन विना कार्यं नोत्पद्यते। अस्ति सूक्ष्ममेकं कारणम्।

रमेशः - तर्हि त्वमाविष्कुरु तस्य कारणम्।

सुरेशः - आविष्कृतं तदेव। तदर्थं कथयामि।

रमेशः - किमाविष्कृतम्? कथय।

सुरेशः - कथयामि, कथयामि, धैर्यं धर। 'आतुरः सर्वकार्येषु नरः शीघ्रं विनश्यति'। कदापि कस्मिन्विषये नातुरो भव।

रमेशः - अरे, त्वं कथमित्थं विभ्रामयसि। यथार्थं न वदसि। कथं क्रीडसि कौतुकेन।

सुरेशः - अहं न क्रीडामि। क्रीडसि त्वम्। सर्वं जानन्नपि मत्तः प्रतीक्षसे चोत्तरम्।

रमेशः - त्वमतिचतुरोऽसि। येन केन प्रकारेण मां पातयितुं प्रयतसे। तव कौशलं विदितचरमेव।

सुरेशः - कौशलं तव किन्तु प्रशंसनीयम्। तव सर्वं गोपनीयं भवति। रहस्योद्घाटनं कठिनं कर्म। अहं तव व्यवहारविषये सुपरिचितः। तस्मात् विदितम्। का तव समस्या? कथं तव चित्तविहङ्गो विचरति। कुत्र विचरति। कामपेक्षते। कस्या कृते क्रन्दति। कां विना निस्तेजमस्ति। कां विना हतवाग् भवति।

रमेशः - कां विना?

सुरेशः - सा सुन्दरी, मदिरेक्षणा या अद्य पुस्तकालयं नागता। यां विना वदनं ते शुष्कम्। मुखकमलं तव कालिमापन्नम्। शरीरं ते निष्प्रभम्। हृदयं ते कातरः। कण्ठो वाष्परुद्धः। नयनं संशोधनप्रवणम्।

रमेशः - अरे, त्वं कविरसि।

सुरेशः - अहं कविः किन्तु कल्पनाजगति विभ्रमसि त्वम्। तस्या मोहिनी

माया मुह्यति त्वाम्। तस्या रूपलावण्यं त्वामकर्षति। तस्या अधरमधु तव हृदयं चोरयति। तस्याः कटाक्षं तव वक्षस्थलं भिन्नति। तस्या मुखचन्द्रिका चकोरमिव त्वामाह्वयते। तस्या अनुपस्थितिस्त्वां दहते। तस्या अभावभावना तव सर्वं वैभवं हरति। किम् सत्यं न वा?

रमेशः – त्वं किं प्रजल्पसि, अहं ज्ञातुं न प्रभवामि। सर्वं मस्तिष्कोपरि पलायते।

सुरेशः – सर्वमचिरे पलायिष्यते। यस्य हृदयं गतं, तस्य सर्वं गतम्। तया नीतं सर्वम्। दत्तं न किञ्चित्। तदर्थं चिन्तां मा कुरु। सापि व्यथादग्धा भवेत्। सापि प्रतीक्षमाणा भवेत्। सा अधीरा वियोगव्यथया। भवेत् तस्याः संकेतोऽस्ति न वा? याहि, तस्या गृहम्। पश्य मुखकमलम्। पिब तस्या नयनमधु। सर्वं व्यवस्थितं भविष्यति। तव मनः शान्तं भवेत्। तव दिनं सुवर्णं भवेत्। तव हृदयं रसमयं भवेत्। अत्र पुस्तकालये किमस्ति? पुस्तकेषु किमस्ति?

रमेशः – तर्हि त्वं सर्वं जानासि।

सुरेशः – सर्वं न जानामि। किञ्चित् किञ्चित्।

रमेशः – कथं ज्ञातम्।

सुरेशः – कथमिति किम्? अहं किं न पश्यामि? अहं किं न शृणोमि। अहं नयनभाषां नावगच्छामि? अहं हृदयधूपगन्धं न जिघ्रामि?

रमेशः – यदि जानासि, कथय तस्या नाम।

सुरेशः – तस्या नाम न जानामि, तस्या ग्रामं न जानामि। मम तस्या नाम्ना किं प्रयोजनम्? तवैवास्ति प्रयोजनम्। त्वमग्रेसर। विपदि अहमस्मि।

रमेशः – आम्, आम्,

सुरेशः – चल! यदि मनो न लगति अध्ययने तर्हि अत्रोपविश्य वृथा कालव्ययस्य का आवश्यकता?



# संलापः – १९

राधा – त्वं किं चिन्तयसि ? ईश्वरोऽस्ति नास्ति वा ?

रश्मिः – ईश्वरोऽस्ति ।

राधा – अहं चिन्तयामि, ईश्वरो नास्ति ।

रश्मिः – कथं नास्ति ?

राधा – यतो नोपलभ्यते, न दृश्यते, न च स्पृश्यते ।

रश्मिः – तर्हि किम् । ईश्वरस्य सत्ता अस्माभिरनुभूयते । सः सुखं ददाति । अस्माकं दुःखं हरति । अस्माकं हृदयेषु सुविचारं संस्थापयति । अस्माकं सौभाग्यं निर्धारयति । यदि परमेश्वरो न स्यात्, तर्हि जगतः सृष्टिः कथमभूत् ? केन कृतमेतत् सर्वम् ?

राधा – अरे, सर्वं प्राकृतिकमस्ति । स्वतः सर्वं भवति । स्वतः संसारे फलं फलति । पुष्पं स्फुटति । स्वतो वृष्टिर्भवति । सस्यमुत्पद्यते ।

रश्मिः – न किमपि स्वतो भवति संसारे । सर्वस्य कर्तास्ति । कर्तारं विना कार्यं नैव भवति । कारणं विना कार्यं नोत्पद्यते । यथा गृहस्य कर्तास्ति मानवस्तथा अनन्तस्य संसारस्य कर्तास्ति परमेश्वरः । अन्यथा विचित्रता कथम् । वैविध्यं कथम् ? अचिन्तनीयं सौन्दर्यं सौकुमार्यं च वस्तुषु कथम् ?

राधा – अरे, त्वमधुना स्वप्नजगति विचरसि । सर्वं स्वप्नवत् पश्यसि । तथैव सर्वं वर्णयसि । तथा नास्ति । यदि परमेश्वरो नाम कोऽपि पदार्थविशेषो विद्यते तर्हि तस्य सेवकः कथमत्र दुःखदग्धो भवति ? कथं तस्य मन्दिरे हत्याकाण्डं घटते? कथं तस्य सम्मुखे समरो भवति ? सरला म्रियन्ते । प्रबला विदारयन्ति सरलानां प्राणपिञ्जरम् । अत्र तस्य पुरतो धर्षणं भवति । शोषणं भवति । लुण्ठनं भवति । दुर्जना दण्डं न लभन्ते ।

रश्मिः – अरे, अस्मिन् विषये ईश्वरः किं करिष्यति ? ईश्वरस्तु पर्जन्यवत् । अत्र मानवः कर्मानुसारं फलं लभते । यावत् कालपर्यन्तं सञ्चितं

पुण्यमस्ति तावन्न किञ्चिदपि भवति। नष्टे पुण्ये तस्य कुकर्मणः फलमुत्पद्यते। आधिव्याधिरूपेण मानवः कर्मणः फलं भुङ्क्ते।

राधा - यदि कर्मणा सर्वं भवति तर्हि कथमीश्वरस्यावश्यकता ? कथं तस्य मन्दिरं प्रति प्रधावनम् ? तस्य प्रतिमोपरि पुष्पार्पणम् ? तस्य नामःस्मरणम्। भजनं, कीर्तनं, सेवनादिकं कथम् ? एतेषां किमस्ति प्रयोजनम् ?

रश्मिः - एतेषां प्रयोजनमस्ति। अनेन मानवः सुखमनुभवति। कायाकष्टं विस्मरति। शारीरिकी, मानसिकी च शुद्धिर्भवति। शान्तिं प्राप्नोति। सन्तोषं लभते। मनःसु जागर्त्यात्मविश्वासः। दृढकर्तव्यनिष्ठा। ईश्वरभक्तो न बिभेति। न हानिलाभौ विचारयति। सर्वमीश्वरं समर्प्य स्वकर्तव्यं कुरुते। ईश्वरः सुफलं दास्यतीति विश्वासेन संसारे तस्य भक्तो विलसति।

राधा - किन्तु यदा क्रन्दति दुःखेन तदा किम् ? यदाधःपतितो भवति तदा किम्? यदार्थशून्यो दरिद्रो भवति तदा किम् ? ईश्वरविश्वासेन कति सरलाः प्रमत्ता भवन्ति। कत्यर्धमृता भवन्ति। कति सर्वदा स्वप्नजगति विचरन्ति। कति पत्रपुष्पफलतोयांसि संगृह्य संगृह्य सुन्दरं जीवनमिदं स्वकरेण विदारयन्ति। अन्ते विलपन्ति बालवत्। भारते कथमेतदन्धपरम्परा प्रचलति?

रश्मिः - अरे, नेयमन्धपरम्परा। इदं सनातनं सत्यम्। अनादिकालान् मानवोऽदृश्यतत्त्वोपरि विश्वसति। कति मुनयः, कति साधकाः, कति वैज्ञानिकाः, कति विद्वांसः अस्य गम्भीरतत्त्वस्य दर्शनं कृतवन्तः। सिद्धपुरुषास्ते। समर्थास्ते। सामान्या न किञ्चिदत्रानुभवन्ति। न किञ्चिदत्रावगच्छन्ति।



# संलापः – २०

माता – अरे पुत्र। अहं वृद्धा जाता। अधुना तव पिता न कार्यक्षमः। धनागमस्य मार्गान्तरं नास्ति। यत् किमपि सञ्चितमासीत् तत् सर्वं समाप्तमेव। क्षेत्रमपि न सस्यमुत्पादयति। प्रतिवर्षं किमपि प्राकृतिकं विपर्ययरूपमेव भवति। त्वमस्माकमाशावृक्षः। धनं समस्तं तव शिक्षायै व्ययितम्। यदि त्वमुपार्जनक्षमो न भवेस्तर्हि गृहं कथं चलिष्यति ? किं वयं खादिष्यामः ? कथं जीवामः ?

पुत्रः – मातः ! अहं सर्वमनुभवामि। भवतां सर्वेषां कष्टमपि परिचिनोमि। मयि दुःखातिशयं भवत्येव। वृद्धपितुः कारुण्यं मां व्यथयति। तव नीरवाभियोगो मां पीडयति। ममात्मा मां सन्तापयति। एतादृशी परिस्थितिर्गृहस्य मामस्थिरीकरोति। किन्तु करोमि किम् ? कार्यालयात् कार्यालयं गच्छामि, प्रतिदिनं वृत्तये भ्रामं भ्रामं स्वरुधिरं जलीकरोमि, जनानुनयविनयं करोमि, भगवन्तं सायंप्रातः प्रार्थयामि परन्तु न किमपि भवति। न किञ्चिदपि मिलति। मम भाग्यं मदुपरि चोपहसति।

माता – पुत्र ! अहं न कथयामि यत् त्वं न यत्नशीलः। त्वं न तव कर्मणि तत्परः। त्वं नोद्योगी। त्वया सश्रमं विद्या अर्जिता। उपाधयेऽधिगता। यावच्छक्यं साधना कृता। प्रयत्नो विहितः। सर्वं सत्यम्। किन्तु .....

पुत्रः – मातः ! न केवलमहम्, मत्सदृशाः सर्वे शिक्षिता दुस्थाः सम्पन्नाः। सर्वेषां दुर्दिनमस्ति। सर्वे सन्ति दुःखिनः। सर्वे भग्नमनोरथाः। अस्मिन् देशे शिक्षितानां कृते स्थानं नास्ति। अतोऽहं चिन्तयामि, देशं विहाय देशान्तरं गमिष्यामि। तत्र कदाचन कार्यप्राप्तिर्भवेत्। अन्यथा अस्मिन् देशे नाहं पश्यामि मम भविष्यत्।

माता – पुत्र ! त्वमित्थं न कथय। त्वया विना सर्वमन्धकारो भवेत्। पुत्र! त्वमावयोर्यष्टिः। त्वमावयोर्धनम्। त्वमावयोः सीमाहीनः स्वप्नः।

त्वमावयोराशाक्षेत्रस्य सुनीलं सस्यम्। तन्न सम्भवम्। त्वं मन्नयनतो दूरं नगच्छ।

पुत्रः - निकटे किं वा भवेत् ? व्यवसायकर्तुमिच्छामि। धनं नास्ति। वृत्तिं कर्तुमिच्छामि तन्न मिलति। यत्किमपि कायमर्थोपार्जनाय शोधयामि, तदपि न प्राप्यते। नियतिर्निष्ठुरा मम। भाग्यं मम विकृतम्। जना मामवलोक्य उपहसन्ति, तिरष्कृवन्तिं, भर्त्सयन्ति, निन्दन्ति। अहं अयोग्य इति उद्घोषयन्ति। अहं कुलाङ्गार इति रटन्ति। गृहस्य हतलक्ष्मीर्मम दुःखं विस्तारयति।

माता - पुत्र ! तव पिता मूर्ख आसीत्। गजमूर्खः। धनधान्यं किञ्चिन्नासीत्। विना विद्यां, विना धनं, विना सहायतां स तस्य संसारं चालयति स्म। तेनाट्टालिका न निर्मिता किन्तु गृहं निर्मितम्। तेन भोगविलासो न दत्तः किन्तु सुखं दत्तम्। तेन शून्यतो गगनं सृष्टम्। तृणतः पादपं वर्धापितम्। अहं सम्यक् स्मरामि। यदाहं नवविवाहिता सती आगतवती अस्माकं स्ववासस्थानं नासीत्। पितामहेन न किञ्चित् संरक्षितमासीत्। किन्तु धैर्येण साकमावामग्रसरौ। शनैः शनैः लक्ष्मीमाता प्रसन्ना अभवत्। विधातुः करुणाकिरणेन निवासाय स्थानमिदं क्रीतम्। शनैः शनैः मृत्तिकागृहं निर्मितम्। मृत्तिकागृहतः प्रस्तरगृहम्। तदनु .....

पुत्रः - मातः, अहमपि परिश्रमं करोमि। मम समस्तां शक्तिं कार्येऽस्मिन् नियोजयामि। अहं न तादृशो निराशः। अवश्यं किञ्चिन् मङ्गलकरं भवेदिति विश्वासः। मात्रमेकवर्षं प्रतीक्षे। तदनु यदि वृत्तिर्न मिलति तर्हि सर्वाणि प्रमाणपत्राणि तथाच स्वर्णपदकानि अग्नौ प्रक्षिप्य शरीरश्रमं करिष्यामि। साधारणश्रमिक इव श्रमं कृत्वा अर्थोपार्जनं करिष्यामि। अस्मिन् युगे स्वप्नानां न किमपि मूल्यम्। भवतां दुःखं नाहं द्रष्टुं सक्षमोऽस्मि।

माता - पुत्र ! वयमस्माकं कृते न चिन्तयामः। येन केन प्रकारेण अस्माकं दिनानि यास्यन्ति। जीवनमनुभूतमस्माभिः। श्रमं विना तस्य

श्वासरुद्धं भवति। कथयति - विश्रामो व्याधिवर्धकः। सुन्दरस्वास्थ्याय श्रम आवश्यकः। श्रमं विना रुधिरप्रवाहः सम्यग् न भवति। श्रमेण विना मानसिकी प्रफुल्लता नायाति। स करोति, करिष्यत्यपि। किन्तु .....पुत्र - किं किन्तु ......माता - यदि तव शीघ्रं नियुक्तिः कुत्र भवेत्तर्हि विवाहाकार्यं समाप्येत। तदप्यावश्यकमस्ति।

पुत्रः - अधुना तस्मिन् विषये न चिन्तय। श्रावयामि त्वां सर्वं तथापि .....

माता - त्वमित्थं, सर्वदा वदसि। कदा तर्हि विवाहो भवेत्। मया एका कन्या दृष्टा। सुन्दरी रूपवती च। तव योग्यास्ति। तस्याः पिता त्वां जामातारूपेण इच्छति। धनपतिरस्ति सः। प्रचुरं धनमपि यौतुकरूपेण दास्यति। तस्य महान् व्यवसायोऽस्ति। यदि किञ्चिन्न मिलति स अस्माकं सहायको भवेत्। का हानिः? बुद्धिमन्तो जना इत्थं कुर्वन्ति। तव पितापि प्रस्तावेऽस्मिन् सम्मतोऽस्ति। केवलं तव हँकार आवश्यकः।

पुत्रः - मातः! अहं कथं हँ करोमि? मम परिस्थितिर्दुःखदायिनी। अहं स्वयं पितोः प्रसादेन जीवामि। तामानीय किं भोजयामि? तस्याः सुखाय किमहं कर्तुं शक्नोमि? सा किमुपार्जनाक्षमं पतिं प्राप्य सन्तुष्टा भवेत्। किं सा अस्मिन् गृहे सुखिनी भवेत्? मम जीवनं तु नष्टप्रायम्। कथं तस्या निर्दोषाया जीवनं नाशयामि। धनं विना कः सुखी भवेत् संसारे?

माता - अरे, त्वमिदं सर्वं न चिन्तय। चिन्ता दुःखदायिनी। कुचिन्तया न किमपि साध्यम्। त्वं तव कर्तव्ये मनो नियोजय। ईश्वरस्य गृहे विलम्बो भवेत्, न तु तमसा। अहं त्वां वचनं ददामि। यदीश्वरस्य करुणा भवेत्, सर्वं व्यवस्थितं भवेत्।

पुत्रः - यथा त्वं योग्यं चिन्तयसि।



# संलापः – २१

केदारः – नहि, नहि, नाहं पत्नीभक्तः। सर्वं मम स्मृतिपटले वर्तते। अद्यापि सर्वं दृश्यमयं भवति। सर्वं नूतनमिव प्रतिभाति। वयो वर्धते सत्यं परन्तु मनस्तु तथा।

किशोरी – तर्हि किं कारणं, तव दर्शनं दुर्लभम्। अस्मिन्युगे उत्तमोत्तमानि साधनानि सन्ति। कति वर्षाणि व्यतीतानि। न दूरध्वनिः कदा कृता। नवा ई-पत्रम्। भवतां कथनोपकथनेऽपि रुचिर्नास्ति। अन्यथा....

केदारः – अन्यथा किम् ? सत्यं न स्पष्टमस्ति। हँ, इदं तु सत्यंयोयदावर्मिलनं न भवति। सम्भाषणं न भवति। सांसारिकं जञ्जालं सर्वेषामस्ति। प्राप्तये प्रगतये च सर्वे व्यस्ताः। दायित्वं वर्धितम्। समस्याः संवर्धिताः। यदि कदा मनो भवति, शरीरं न सहायकं भवति। अपरमपि कारणं यज्जनाः किं चिन्तयिष्यन्ति। यदि तव गृहमागमिष्यामि तर्हि तद् भवतां कृते प्रमोदकरं न भवेत् ? दुःखकारणं भवेत्। भवेन्नवा मम मनसि सर्वदा तदर्थं कुण्ठाबोधः।

किशोरी – त्वं हि सर्वमेतच्चिन्तयसि। नान्यः। अधुना तादृशी संकीर्णता नास्ति। शिक्षालोकेन सर्वं परिवर्तितम्। एतादृशो विचारो न कर्तव्यः। यदि वयं निर्मलास्तर्हि चिन्ता कथं करणीया। असत्यं यदि वदन्ति, वदन्तु ते। अस्माकं का हानिर्भविष्यति। मूर्खाणां विषये विचारो नैव विधेयः। गृहे यदि समस्यास्ति तर्हि कथा भिन्ना।

केदारः – गृहे का समस्या भवेत् ? समाजे सर्वं मिलति। यशो मिलति, अपयसोऽपि मिलति। लाभो भवति। हानिरपि भवति। गालिर्मिलति। प्रशंसापि मिलति। एतत् सर्वं साधारणम्। अतिसामान्यं विषयं गृहीत्वा कथं त्वमतीव स्नेहशीतलः। मम दर्शनं तु – 'यावज्जीवेत् सुखं जीवेत्। सर्वं त्यक्त्या सुखं भजेत्'।

अत्र मानवः सुखाय सर्वं करोति। 'आत्मनस्तु कामाय सर्वं प्रियं भवति'। अस्माकं वसनं सुखाय भवति, अस्माकं भूषणं सुखाय भवति तथैवास्माकं स्नेहमिलनमपि। ये जना अस्मान् स्निहन्ति, येषां स्वभाववशाद् वयं सुखमनुभवामः, येषां साहचर्यमस्माकं मनःसु प्रमोदमुत्पादयति, येषां कार्यपद्धतिः अस्माकं चित्तवनं भूषयति, येषां मैत्री सुखवृक्षस्य बीजरूपं धारयते, ते सर्वदा वरणीयाः। तेषां परित्यागेन वयमपि त्यक्ता भवामः।

किशोरी - त्वमधुनोन्मादिनी सञ्जतेति मन्ये। तव वाक्च्छटा रोचते। अनन्तधारामयी त्वं यथा ममाग्रे। प्रायः स्थानकालपात्राणि विस्मरसि।

केदारः - हँ, सर्वं विस्मरामि। सर्वं स्मृत्वापि किं करोमि ? अहं तदेव स्मृतिज्ञानखण्डं मनसा धारयामि यदहं सुखस्वप्नं ददाति। यदहं यातनाजालमध्ये यष्टिरूपेण सहायकं भवति। अन्धकारे आलोकवन् मार्गं दर्शयते। तस्य समयस्य स्मृतिचिह्नं तथापि आवेगीकरोति। स्मरसि त्वम्। तदानीं त्वं सर्वदा कथितवान् 'नहि ज्ञानेन सदृशं पवित्रमिह विद्यते'। तेनाहं संप्रेरिता जाता। त्वमभव मम प्रेरणास्रोतः। जीवने सर्वं प्राप्तम्। परमेशो न कृपणः। दयावान् सः। महान् सः। स रत्ननिधिः। ददाति, केवलं ददाति।

किशोरी - उर्मि, मन्ये त्वं भावोन्मादिनी। आकस्मिकीयं श्रावणस्य वारिधारा कस्मादागता। किं कारणम् ?

केदारः - कारणं तव मिलनम्। तव दर्शनम्। संसारे स्वल्पा मनुष्याः सन्ति। येऽन्येषां हृदयं जानन्ति। किम्भूतं चुम्बकीयतत्त्वं तेषां हृदयेऽस्ति भगवान् जानाति। ते सर्वदा समाकर्षन्ति। ते सर्वदा स्मरणपथं समागच्छन्ति। तेऽपि सर्वदा भावनावैभवमलंकुर्वन्ति। मण्डयन्ति ते चित्तमण्डपम्। खण्डयन्ति चित्तस्थं नैराश्यबोधम्। संवर्धयन्ति सततं स्नेहसम्पत्तिम्। तस्मात्तेऽविस्मरणीया भवन्ति। समयस्य महारथो

धावति सत्यं, स्मृतिः किन्तु चित्तपिञ्जरे तथैवाक्षुण्णा तिष्ठति।

किशोरी - मत्कृते तवास्ति महानादरः। महान् प्रेम। इदं तव विशालहृदयस्य परिचयः। तवोन्नतमानसिकतामात्रम्। अहं धन्यो भवामि यदि मया किञ्चित् सामान्यं कृतं कथितं वा यद्द्वारा तवोपकारो जातः। कदा कदा सामान्यकथनमपि लाभदायकं भवति।



# संलापः – २२

लक्ष्मीः – सरस्वति ! त्वं वृथा गर्वपर्वतोपरि विचरसि। तवास्ति किम् ? अस्मिन् कलियुगे ये त्वां भक्तिपूर्वकं संसेवन्ते ते सन्ति दरिद्राः, अकिञ्चनाः, असहायाः। त्वं तानपि नोपकरोषि। किन्तु ये मां सेवन्ते सादरं, तेषां मम कृपया सर्वविधं मंगलं भवति। तेषां सुखस्य सीमा न भवति। ते यथार्थेन जीवन्ति। जीवने सर्वविधं सुखमनुभवन्ति। तव सेवकास्तु मृता इव जीवन्ति। येषां धनं नास्ति तेषां जीवनं नास्ति। विद्यया किं भवति ? समयो गतः। यदा जनाः कथयन्ति स्म – 'विद्याधनं सर्वधनात् प्रधानम्'।

सरस्वती – किं जल्पसि ? अभिमानिनी त्वम्। धनं जीवने सुखं नानयति। धनेन सन्तोषो नायाति। धनस्य स्थिरता नास्ति। धनेन मानवः पूज्यो न भवति। 'स्वदेशे पूज्यते राजन् विद्वान् सर्वत्र पूज्यते'। विद्वान् धनस्य पश्चान्न धावति। मानो हि महतां धनमिति मत्वा ते सन्तोषपूर्वकं सुखेन जीवन्ति। युगे युगे वैज्ञानिकाः पूज्यन्ते। विचारकाः समाद्रियन्ते। शास्त्रज्ञाः सम्मानिता भवन्ति। कवयः कीर्तिकौमुदीप्रभया प्रभावशालिनो भवन्ति। पश्य, ये मूर्खाः, मदोमत्ताः, भोगविलासिनः, पदप्रतिष्ठाप्रेमिणः, सदाचारविहीनास्त एवोपासकाः सन्ति तवैव। धनाय जीवनरत्नं तृणीकृत्य प्रधावन्ति। अतोऽहं धन्यास्मि। त्वत्तोमहत्तरास्मि।

लक्ष्मीः – असत्यं कथं वदसि ? अद्य कस्यास्ति महती प्रतिष्ठा ? कस्याः कीर्तिकौमुदी समग्रं विश्वमुद्भासयते ? कस्या भयेन प्रकम्पते जनता। कस्य साहसोऽस्ति मामवगणयितुम्? कस्य सामर्थ्यमस्ति मां तिरस्कर्तुम् ? अहं समग्रं विश्वमान्दोलयामि। सर्वेषामाहाराय, विहाराय, संहारय, मम कृपया आवश्यकतास्ति। यो मां निन्दति स भिक्षुको भूत्वा वसवासविहीनो भवन् कीट इव विचरति।

द्वाराद्द्वारान्तरं गच्छति। तस्य दुर्दशा किं भवति सर्वे जानन्त्येव। कथनस्यावश्यकता नास्त्यत्र। तव सेवका अपि मां तेषां हृदयसदनेषु संस्थापयन्ति। तेषामुद्धाराय संप्रार्थयन्ते। यदि तवास्मिन्विषयेसम्यग्ज्ञानं नास्ति तर्हि बहिर्गच्छ। अवलोक्य स्वनेत्राभ्यां तेषां दुरावस्थाम्। विज्ञापय तान् सुमार्गम्। आदेशय तान् वेत्तुं यथार्थम्। अवगन्तुं मम महत्त्वम्।

सरस्वती - अहं त्वां धिक्करोमि। तव गुणगानं न करोमि। तव कृपाकलशं नेच्छामि। तव द्वारे भिक्षां न याचे। तव सेवकानां तुच्छं चाकचक्यसंपन्नं पूजार्चनं न कामये। अहमस्मि महाशान्तौ। मद् भक्ता विषयवासनारहिता धनं विनापि सानन्दं जीवन्ति। उच्चस्थानानि लभन्ते। गुणवन्तो यशस्विनश्च भवन्ति। विद्वान् कदापि बुभुक्षितो न भवति। अनादृतो न भवति।

लक्ष्मीः - असत्यं कथं कथयसि ? धनं विना कस्याप्येकस्य जीवनयानं न चलति। चलितुमपि न शक्नोति। कथयन्ति ते -

माता निन्दति नाभिनन्दति पिता भ्राता न सम्भाषते
भृत्यः कुप्यति नानुगच्छति सुतः कान्ता च नालिङ्ग्यते।
अर्थप्रार्थनशङ्कया न कुरुते प्यलापमात्रं सुहृत्
तस्मादर्थमुपार्जय प्रियसखे ह्यर्थस्य सर्वे वशाः ॥

अस्मिन् युगे वित्तेश्वरो विजयते सर्वत्र। प्रातरुत्थाय जना वित्तेश्वराय नमः, वितेश्वराय नमः इति महामन्त्रस्य जपं कुर्वन्ति। कति ॐ महालक्ष्मैः नम इति सायंप्रातः जपन्ति। हे सरस्वति ! तव स्थानं कुत्र ? कुत्र सन्ति तव भक्ताः ? कुत्रास्ति विद्यां प्रति समादरः ?

सरस्वती – विद्याया महत्त्वविषये त्वमनभिज्ञा। यतस्त्वं स्वयं न विदुषी। 'किमन्धस्याधिकारोऽस्ति रूपभेदोऽपलब्धिषु'। यथार्थवचनं विद्याविषयेऽहं त्वां श्रावयामि :-

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं
विद्या भोगकारी यशः सुखकरी विद्या गुरूणां गुरुः ।
विद्या बन्धुजनो विदेशगमने विद्या परं दैवतम्
विद्या राजसु पूज्यते न तु धनं विद्याविहीनः पशुः ।।

लक्ष्मीः - तव पाण्डित्यं मां न प्रदर्शय। चराचरे संसारे नित्यमहं विभ्रमामि। स्वर्गे, मर्त्ये, पाताले किं किं भवति, सर्वं भवति मम ज्ञानविषयः। स्वर्गस्था देवा अधुना विषयवासनाभिः समाक्रान्ताः सन्तः तेषां तृष्णाज्वरोपशमाय धनदेवं समर्चयन्ति। अतो देवभाषाद्य तिरस्कृता। तस्या विकाशाय न कोऽप्युद्यमशीलः। मर्त्यलोकस्य कथा न कथनीयास्ति। तत्रासुरा सुरा इव राराजन्ते। असुन्दराः सुन्दरा इव विराजन्ते। चोराः शूरा इव सञ्चरन्ति। कस्याः प्रसादेन ? वद, नहि नहि, त्वं वद, कस्य प्रसादेन ? सर्वं मम करुणाकल्पतरोः फलमस्ति।

सरस्वती - अरे मूर्खे, त्वं ध्वंसस्य बीजं वपसि समग्रे चराचरजगति। सर्वानर्थस्य मूलं त्वमसि। जनानां मनःसु त्वं सृजसि लोभं, मोहं, कामं, क्रोधं, अहंकारं तथा विषयतृष्णाम्। तव मायाशक्त्या प्रमत्तायितास्ते मानवजीवनस्य महदुद्देश्यं विस्मृता स्वप्नपश्चाद् धावन्ति मृगा इव। पश्यन्तोऽपि न पश्यन्ति। शृण्वन्तोऽपि न शृण्वन्ति। अधमास्ते धनगर्वेण सर्वविधमनैतिकं कर्म कुर्वन्ति। अस्मात् कारणात् ते सर्वे नरकं गमिष्यन्ति। अस्तु, अलं विवादेन ?

लक्ष्मीः - अस्तु, अस्तु।



# संलापः – २३

अर्जुनः – किं करिष्यामि ? किमत्र करणीयं मम। अधुनाहं कातरः। दौर्बल्यं मां सीदति। मम गात्राणि सीदन्ति। मुखं मम परिशुष्यति । शरीरे वेपथुर्जायते। हस्ताद् गाण्डीवं संस्रते। त्वक् मम परिदह्यते। अहमवस्थातुं न शक्नोमि। मनो मे विभ्रमति। अन्यानि निमित्तानि चापि नाहं पश्यामि। नाहं विजयं कांक्षे। नाहं सुखानि कांक्षे। हे केशव, अद्भुतं किमपि मदन्तरे भवति।

कृष्णः – किं जातम् ?

अर्जुनः – अस्मिन् हननकार्ये श्रेयो नास्ति। राज्येन किं प्राप्तव्यमस्ति ? भोगे को लाभः ? किं तेन जीवितेन मम यदि सर्वे प्रियजना विनश्यन्ति। एतान्नाहं हन्तुमिच्छामि। यद्यपि ते मां निहन्तुमत्र समागताः। हे गोविन्द ! एतान् धार्तराष्ट्रान् निहत्य मम का प्रीतिः स्यात्। केवलमेतेषामाततायिनां हननजन्यं पापं भवेत्।

कृष्णः – अरे अर्जुन । किं भवति तव।

अर्जुनः – हे केशव। नाहं हन्तुं समर्थः। स्वबान्धवानां हननं न सम्भवम्। स्वजनं हत्वा कथं सुखी भवामि। एते पातकं न पश्यन्ति। कुलक्षयकृतं दोषमपि न पश्यन्ति। स्वजनान् राज्यसुखलोभेन हन्तुं समुद्यताः। ममात्र हननं श्रेयम्। अहं तस्मात् चापं त्यजामि।

कृष्णः – हे अर्जुन । कथं कस्मलमिदं विषये समयेऽस्मिन् समुपस्थितम् ? इदं किन्तु अकीर्तिकरम्। त्वं क्लैव्यं मास्म गमः। इदं न योग्यमस्ति। हे परन्तप। क्षुद्रं हृदयदौर्बल्यं त्यक्त्वा उत्तिष्ठ।

अर्जुनः – हे मधुसूदन। कथमहं प्रतियोत्स्यामि भीष्मं द्रोणं च। तौ मम पूर्जाहौ। अहं तव शिष्यः। ‘-यच्छ्रेयः स्यात् तन्मे ब्रूहि।

कृष्णः – हे अर्जुन। त्वमशोच्यानन्वशोचः। प्रज्ञावादान् भाषसे। अस्मिन्

संसारे न कोऽपि जायते, न कोऽपि च म्रियते। आत्मा अजरः, नित्यः, शाश्वतः। शरीरे हन्यमाने नायं हन्यते। अविनाशिनं, अजं, अव्ययं चात्मानं को घातयति। यथा जीर्णं वस्त्रं परित्यज्य नरोऽपरं नूतनं वस्त्रं तथैवात्र देही पुरातनं शरीरं त्यजति। नूतनं धारयते। आत्मा न शरीरम्। आत्मा न जराजीर्णम्। आत्मा न नश्वरम्। शश्त्राणि नैनं छिन्दन्ति। पावकः नैनं दहति। आपो न चैनं क्लेदयन्ति। न वा मारुतः तं शोषयति। हे अर्जुन ! अयमात्मा अच्छेद्यः। अयं अदाह्यः। अयं अक्लेद्यः। अयं अशोष्यः। अयं नित्यः। अयं सर्वगतः। अयं स्थाणुः।अयं अचलः। अयं सनातनः। अयं अव्यक्तः। अयं अचिन्त्यः।अयं अविकार्यः। अतोऽस्मिन् विनाशविषये चिन्तनं नैवोचितम्। संसारे यस्य जन्म भवति, तस्य मरणमवश्यमेव। वृथा तस्मात्तव परिदेवना। हे केशव ! कथं धोरेऽस्मिन् कर्मणि मां नियोजयसि? कथं मां मोहयसि?

अर्जुनः - नहि मोहयामि। संसारेऽस्नि् मार्गद्वयं मया प्रोक्तमस्ति। एकः ज्ञानयोगः, ज्ञानिनां कृते। अपरः कर्मयोगः। योगिनां कृये। अनारभ्य कर्म नात्र कोऽपि नैष्कर्म्यमश्नुते। न कोऽपि तथा कर्मणि सन्यसनात् सिद्धिं समधिगच्छति। तस्मात् त्वं मुक्तसङ्गः कर्म समाचर। कर्मणैव संसिद्धिः।



# संलापः – २४

राघवः – अरे मोहन! कुत्र गच्छसि?

मोहनः – मम प्रियमित्रगृहं गच्छामि। यदि समयश्चेत् त्वमपि मया सह आगच्छ। मम मित्रस्य स्वभावोऽतीवसुन्दरः।

राघवः – अहं तत्रागत्य किं करिष्यामि? अहं तं न जानामि।

मोहनः – अहमस्मि। त्वं कथं चिन्तयसि। परिचयं कारयिष्यामि।

राघवः – सः किं चिन्तयिष्यति? अनाहूतः प्रविशति।

मोहनः – नहि, नहि, सः न किमपि चिन्तयिष्यति। सः न तादृशो यथा तव मनसि विचारो विद्यते। अतिसाधारणः सः।

राघवः – परन्तु मम वस्त्राणि न समीचीनानि सन्ति। अहं केवलं अत्रैव भ्रमामि स्म। गृहं गत्वा आगन्तुं शक्नोमि चेत्।

मोहनः – अस्तु, अस्तु, तव गृहं गमिष्यावः। तस्मात् पुनः–

राघवः – अरे, नहि नहि, तन्न सम्भवम्। गृहे ममोपस्थितिरनिवार्या। मम माता कुत्र गमिष्यति। कनिष्ठभ्रातुः रक्षणं मम दायित्वम्। गृहं त्यक्त्वा गन्तुं न शक्नोमि। यथाकाले स्मरणं जातमिति प्रमोदः। त्वमपि मया सह आगच्छ। अन्यदा मित्रगृहं गच्छ।

मोहनः – अरे, तत् कथं भविष्यति? मया पूर्वसूचना दत्ता स मम प्रतीक्षायां भवेत्।

राघवः – तस्य दूरवाणीसंख्या विद्यते। नय मम मोबाइल्। तं सूचय रविवासरे आवां तत्र गमिष्यावः।

मोहनः – त्वं सत्यं वदसि? रविवासरे नूनं गमिष्यावः?

राघवः – हँ, हँ, सत्यं वच्मि। सन्देहो नास्ति। अवश्यं चलिष्यावः।

मोहनः – पश्य, तद्दिने अहं न किमपि पश्यामि। वचनं सर्वदा रक्षणीयं भवति। अन्यथा तवोपरि न कोऽपि विश्वासं करिष्यति।

राघवः – अरे, त्वमित्थं वदसि यथा धर्मराजो युधिष्ठिरः। कदा कदा परिस्थितिवशात् वचनभङ्गोऽपि भवति। सर्वमस्माकं हस्ते न भवति। दैवबलान्नान्यबलं प्रधानम्। भवितव्यानां द्वाराणि भवन्ति सर्वत्र।

मोहनः – तत्तु सत्यम्। तथापि दत्तं वचनं रक्षितुं प्रयत्नोवश्यं करणीयः। अहं तु अस्मिन् विषये सर्वदा दृढनिश्चयः। यदि वचनं ददामि अवश्यं तत् पालयिष्यामि। यदि महान् प्रतिबन्धको भवेत् तर्हि वार्ता भिन्ना। अन्यथा—

राघवः –अस्तु, विषयममुं त्यज। विषयान्तरे चर्चा करिष्यावः।

मोहनः –कस्मिन् विषये।

राघवः –यस्मिन् कस्मिन् विषये।

मोहनः –अस्तु पाठ्यविषये विचारयिष्यामः। तव पठनकार्यं कथं चलति। तव विद्यालये शिक्षकाः कथं सन्ति।

राघवः – मम पठनकार्यं सुष्ठुरूपेण चलति। परन्तु शिक्षका मम विद्यालये न योग्याः सन्ति। ते न समर्थाः न च श्रद्धापरायणाः। अतोऽहं आगामिनि वर्षे विद्यालयं त्यक्तुमिच्छामि।

मोहनः – अहमपि तथा कर्तुमिच्छामि। सर्वत्र दशा समाना। काकाः सर्वत्र कृष्णवर्णाः। अस्तु चलिष्यामः।

राघवः –अस्तु अस्तु तव गृहं निकटेऽस्ति अथवा दूरे।

मोहनः –अरे, नातिदूरे अस्ति।



# संलापः – २५

किशोरः – अरे, कैलास! किं करोति भवान्?

कैलासः – अध्ययनं करोमि

किशोरः – कस्याध्ययनं करोति?

कैलासः – वेदाध्ययनं करोमि

किशोरः – वेदाध्ययनम्? अस्मिन् यन्त्रयुगे वेदाध्ययनं कोऽपि करोति किम्? तेन को लाभः? किं तस्य प्रयोजनम्?

कैलासः – वेदानां प्रयोजनमस्ति युगे युगे भ्रातः। यो वेदं निन्दति स नास्तिकेति कथ्यते। यथोक्तं मनुना नास्तिको वेदनिन्दुकः। वेदेषु सर्वमस्ति। अस्माकं संस्कृत्याः सभ्यतायाश्च मुखमस्ति वेदः। भारतीया संस्कृतिः महतीति वेदादेव ज्ञायते।

किशोरः – किशोरः, अहं ज्ञातुमिच्छामि किं नाम वेदनामध्येयम्?

कैलासः – मन्त्रब्राह्मणयोर्वेदनामध्येयम्। अपौरुषेयं श्रुतिः। सा च मन्त्रब्राह्मणे। विवृतक्रियातन्त्राः मन्त्राः। मन्त्राणां स्तुतिनिन्दाव्याख्यान – विनियोगग्रन्थौ ब्राह्मणम्। ऋग्यजुः सामवेदास्त्रयी। आथर्वणश्च तुरीयः। तत्रार्थव्यवस्थितपादा ऋचः। ताः सगीतयः सामानि। अच्छान्दांस्य गीतानि यजूंषि। ऋचो यजूंषि सामानि चाथर्वणं त इमे चत्वारो वेदाः।

किशोरः – तथैव चोपवेदाः सन्तीति कथ्यते।

कैलासः – आम्, इतिहासवेदधनुर्वेदे। गान्धर्वायुर्वेदावपि चोपवेदाः। वेदोपवेदात्मा सार्ववर्णिकः पंचमो गेयवेदः। तथैव वेदस्याङ्गानि सन्ति। शिक्षा, कल्पो, व्याकरणं, निरुक्तं, छन्दोविचितिः, ज्यौतिषं च षडङ्गानि।

किशोरः – तेषां विषये किञ्चिदधिकं कथय।

कैलासः – तत्र वर्णानां स्थानकरणप्रयत्नादिभिः निष्पत्तिनिर्णयिनी शिक्षा, अपिशलीयादिका। नानाशाखाधीतानां मन्त्राणां विनियोजकं सूत्रं कल्पः। सा च यजुर्विद्या। शब्दानामन्वाख्यानं व्याकरणम्। निर्वचनं निरुक्तम्।

छन्दसां प्रतिपादयित्री छन्दोविचितिः। ग्रहगणितं ज्यौतिषम्।

किशोरः –त्वमेतेषां विषये जानासि ?

कैलासः – आम् जानामि। संस्कृतसाहित्ये पुराणान्यपि विद्यन्ते। पौरुषेयं पुराणम्। वेदाख्यानोपबन्धनप्रायं पुराणमष्टदशधा। यदाहुः –

सर्गः प्रतिसंहारः कल्पो मन्वन्तराणि वंशंविधिः।
जगतो यत्र निबद्धं तद्विज्ञेयं पुराणमिति ॥

पुराणप्रविभेद एवेतिहासः इत्येके। स च द्विधा परिक्रियापुराकल्पाभ्याम्।

परिक्रिया पुराकल्प इतिहासगतिर्द्विधा।
स्यादेकनायिका पूर्वा द्वितीया बहुनायका ॥

किशोरः – अस्तु, किशोर! अद्य समयो नास्ति। अन्यस्मिन् कस्मिन् समये आगच्छामि। तव ज्ञानस्य लाभं नेष्यामि। अद्याहं लाभान्वितोऽस्मि। भवद्भिः महान् उपकारः कृतः। कृतज्ञतामेतदर्थमर्पयामि। अस्तु, पुनर्मिलावः।



# संलापः – २६

माधवः – अरे गोपाल ! नमस्ते

गोपालः – नमस्ते, किमद्य चलति ?

माधवः – किं चलिष्यति ? तदेव पुरातनं कार्यम्। संस्कृतप्रचारं करोमि। अन्यत् किं वा करिष्यामि ?

गोपालः – अरे, तदेव शोभनं कर्म। महत् कर्म भवद्भिः क्रियते। तत्तु कर्तव्यमेव। संस्कृतभाषा देवभाषा। भारतीया संस्कृतिः अन्यथा मरिष्यति।

माधवः – अरे, अस्माकं समाजेऽन्धपरम्परा प्रचलति। जनाश्चिन्तयन्ति यत् संस्कृतभाषा कठिनास्ति। सर्वेषां कृते नास्ति। इयमसामान्या। इयं केवलं पण्डितानां कृतेऽस्ति। इयमस्ति भ्रान्तधारणा।

गोपालः – सत्यं, सत्यम्। विषयेऽस्मिन् न सन्देहः। संस्कृतभाषा सर्वासां भाषाणां जननी। इयममरा। अस्यां भाषायां वेदा लिखिताः। शास्त्राणि लिखितानि। पुराणानि लिखितानि।

माधवः – सत्यम्, भवन्तः सम्यक् वदति। संस्कृतभाषायाः रूपद्वयमस्ति। कठिनरूपं सरलरूपञ्च। विदूषां कृते कठिनरूपमावश्यकम्। सामान्यानां कृते सरलरूपमस्ति। अस्माकं भारतवर्षे विद्यते ग्रामविशेषे यत्र साधारणजनाः संस्कृतेन वदन्ति। सर्वदैव संस्कृतं वदन्ति। नान्यां भाषां वदन्ति।

गोपालः – किं कथयसि ? संस्कृतेन वदन्ति।

माधवः – हँ, सत्यं वच्मि। बेदं काल्पनिकं कथनम्। संस्कृतमतिसरलमस्ति। आधुनिकं संस्कृतमिति यत् कथ्यते तत्तु सरलमेव। सहजमेव। अनायासेन संस्कृतभाषया वक्तुं शक्यते। व्यावहारिकं संस्कृतं न कठिनमस्ति।

गोपाल: – आम्, व्यावहारिकसंस्कृतविषये वयं विचारयामः। अद्यतने युगे संस्कृतस्य महती आवश्यकता विद्यते। संस्कृतभाषा संगणकयन्त्रस्य महती उपकारिणी विद्यत इति वैज्ञानिकाश्चिन्तयन्ति। संस्कृतस्य सरलीकरणाय प्रयत्ना भवन्ति।

माधव: – आम्, आम्। दशदिनाभ्यन्तरे संस्कृतं शिक्षयन्ति कति विद्वांसः। अधुना जनानां संस्कृतं प्रत्यनुरागो वर्धमानो दृश्यते। संस्कृतं पठनीयमिति ते अनुभवन्ति। सरलसंस्कृतेन लिखिताः भगवद्गीतादिन् ग्रन्थान् पठन्ति। रामायणं प्रति तथाच महाभारतं प्रति जनानामाकर्षणमस्ति।

गोपाल: – केवलमाकर्षणेन किम् ? जना यदा अनुवादं विहाय मूलभाषां संस्कृतं पठिष्यन्ति तदा संस्कृतस्य महानुपकारो भवेत्। परन्तु तथा न भवति। जना अनुवादं पठन्ति तद्द्वारा मूलसंस्कृतं शनै शनैः दूरं याति। भाषां प्रति श्रद्धा भवितव्या।

माधव: – अरे, साधारणानां जनानां विषये किं कथनीयम्। संस्कृत–छात्रास्तथाचाध्यायका अपीदं कुर्वन्ति। ते मूलसंस्कृतं कठिनमिति मत्वा अनुवादं पठन्त्येव। तेन संस्कृतस्य महती क्षतिर्भवति। न कोऽपि तस्मिन् विषये विचारयति। यदि संस्कृतछात्राः संस्कृतं न पठिष्यन्ति तर्हि संस्कृतं कः पठेत् ?

गोपाल: – त्वं सत्यं वदसि। अनिवार्यरूपेण एतैः संस्कृतं पठनीयमेव। तद्द्वारा भाषागता प्रौढता आगमिष्यति। तया प्रौढतया भावावबोधः सहजो भवेत्। शनैः शनैः काठिन्यं यदनुभूयते तत्तु दूरं यास्यति।

माधव: – तदर्थं धैर्यमप्यावश्यकम्। अधुना समाजे कस्य धैर्यमस्ति। सर्वे सरलमार्गमनुसरन्ति। अतस्ते दुर्बला भवन्ति। संस्कृतं वक्तुं न पारयन्ति। तेषां श्रमो विफलो भवति। न कोऽपि परिणामविषये

चिन्तयति। अयं मार्गो न श्रेयान्।

गोपालः – त्वं किं चिन्तयसि ? अस्या विरोधः कर्तव्यः। इयमन्धपरम्परा संस्कृतं नाशयति।

माधवः – परन्तु कः करिष्यति विरोधम्। सर्वे निज व्यापारे व्यापृताः। जगति स्वार्तान्धा जनाः स्वस्वार्थं विना न किमपि पश्यन्ति। ये सर्वे संस्कृतभाषया लाभान्विता भवन्ति ते विषयेऽस्मिन् न चिन्तयन्ति। सर्वं यथा तथा चलति।

गोपालः – यद् भवतु नाम संस्कृतस्य प्रचाराय प्रसाराय च अस्माभिः प्रयत्नः कर्त्तव्यः। अस्मिन् देशे संस्कृतं जीवतु। दिशि दिशि अस्या भाषायाः गौरवं प्रसरतु। जनाः क्रमशः संस्कृतस्य मूल्यमवगच्छन्तु। ते संस्कृतज्ञा भवन्त्विति अस्माकं कामना।

माधवः – साधुः, साधुः।

माधवः – पुनर्मिलावः।



# संलापः – २७

रामः – परीक्षा समाप्ता। किं करणीयम्। पठितुं मनो न लगति। भ्रमितुमपि नेच्छति मनः। गृहे कार्यान्तरं नास्ति। किं करोमि तदपि चिन्तयामि।

हरिः – चिन्तय, चिन्तय, चिन्तनमपि कार्यविशेषः। पश्य, दार्शनिकाः सर्वदा चिन्तयन्ति। चिन्तनस्य फलं सुमधुरम्।

रामः – अरे, किं चिन्तयामि। नाहं दार्शनिकः। न वा दर्शनविषयो मह्यं रोचते। साहित्ये मम रुचिः। अवकाशसमये साहित्यं पठामि। अधुना मन्निकटे पुस्तकानि न सन्ति। ग्रन्थागारं गन्तुमपि नेच्छति मनः।

हरिः – मनोपरि तव नियन्त्रणं नास्ति किम् ? मनोपरि नियन्त्रणमा–वश्यकम्। अन्यथा महद्दुःखं भवेत्। दुःखस्य कारणं मनः। सुखस्य कारणमपि मनः। मनरेव मनुष्याणां कारणं बन्धमोक्षयोः।

रामः – अतोऽहं चिन्तयामि, अस्मिन् समये योगाभ्यासं करिष्यामि। योगाभ्यासं विना नान्या गतिः। योगेन चित्तवृत्तिः स्थिरा भवेत्। चञ्चलं मनः स्थिरं भवेत्। मानसिकी शान्तिरायाष्यति। शान्तिं विना सुखं कुत्र ? भगवद्गीतायामुक्तमस्ति – अशान्तस्य कुतः सुखम् ?

हरिः – अहं बोद्धुं न शक्नोमि – कारणं विना कथमस्थिरो भवति मनः। कस्मिन् विषये मम चिन्ता नास्ति। सर्वं सुलभमस्ति। तथाप्यस्थिरं भवति मनः। न कस्मिन् विषये लगति।

रामः – इदं सर्वेषां भवति। न केवलं तवैव । अयं मनसः स्वभावः। मनो मानवं सुखीकरोति, दुःखीकरोति। अकार्यं कर्त्तुं प्रेरयति। योग्यं कार्यं कर्त्तुं न प्रचोदयति।

हरिः – सत्यं, संसारे स महान् यस्य मनोपरि नियन्त्रणमस्ति। स योगीवरो भवति। सर्वस्य मूले मनः।

रामः – पश्य नु अस्मिन् संसारे जना वृथा क्रन्दन्ति। सर्वमस्ति तथापि ते न

सुखिनः सन्ति। धनमस्ति, शोभनं गृहमस्ति। स्थायिनी वृत्तिरस्ति। पुत्रीपुत्राः सन्ति। रूपवती भार्या अस्ति। तथापि दुःखम्। अतः संसारोऽयं दुःखमयः। दुःखस्य कारणं तृष्णेति कथ्यते। यावत्कालपर्यन्तं तृष्णा विद्यते तावत् कालपर्यन्तं न शान्तिः। तृष्णा मायामयी। सर्वानर्थस्य मूलम्। यदि कोऽपि सुखीभवितुमिच्छति तर्हि तेन तृष्णा त्यक्तव्या।

हरिः – अतः कथ्यते

तृष्णावैतरणी सदैव तरुणी संसारसंवर्धिनी
सा शान्ता परमत्र पङ्किलजला सन्तापसंयोजिणी।
सा माया धनमानरूपविभवा वैराग्यविध्वंसिनी
दूरादेव नमस्करोमि कुटिलां सौन्दर्यस्त्रोतस्विनीम्।

रामः – अन्यत् सर्वं कार्यं विहाय योगाभ्यासः करणीयः। योगेन सर्वार्थसिद्धिर्भवति। तृष्णा पलायते वेदना विनश्यति। यातना याति। कामना नोदेति। भावना न भाति। योगं विना नान्या गतिः।

हरिः – चल, अहमपि त्वया सह योगनिकेतनं चलिष्यामि। प्रातरुत्थाय षड्वादने तत्र गन्तव्यम्। एकघण्टां यावत् नियमितरूपेण योगाभ्यासं करिष्यामः। अवकाशसमये अन्यत् कार्यं नास्ति। अयं योग्यः कालः। शुभकार्यस्य प्रारम्भे कथं बिलम्बः। श्वः षड्वादने तत्रैव मिलिष्यामः।



# संलापः – २८

माधवः – मकरन्द ! मया ज्ञातं यत् त्वं परीक्षायामसफलो जातः । किमेतत् सत्यम् ? किं कारणमस्य ? किं योग्यपरिश्रमो न कृतः ?

मकरन्दः – हँ माधव ! सत्यमेतत् । अधुना अनुतापः क्रियते । दुःखं भवति । किं करणीयमस्ति। यत्कर्तव्यमासीत् तत्तु मया न योग्यसमये कृतम् । अधुना क्रन्दनस्य न किमपि फलम् ।

माधवः – मकरन्द ! पश्य, सफलताप्राप्तये परिश्रम आवश्यकोऽस्ति। परिश्रमं विना संसारे न किमपि प्राप्तुं शक्यते। विशेषरूपेण मनो निधाय मानसिकोऽथवा शारीरिकः श्रमः परिश्रमपदेन कथ्यते। सृष्टेः प्रारम्भकालादारभ्य अद्यतनां विकसितसभ्यतां यावत् सर्वं परिश्रमस्य परिणामः । जीवनसंग्रामे परिश्रमी जनः सर्वदा विजयी भवति। इत्थं शिक्षाक्षेत्रेऽपि परिश्रमी छात्रः सफलतां प्राप्नोति। उद्यमशीलस्य वणिजः साफल्यमपि परिश्रमोपरि निर्भरयति ।

मकरन्दः – माधव त्वं सत्यं वदसि । मया परिश्रमो न कृतः । टिभिदर्शने वृथा कालोऽतिवाहितः। मम ध्यानं पठने नासीत्। मया चिन्तितं परिश्रमं विना सर्वमित्थं भविष्यति। मम विचारो दोषयुक्त आसीत् । तस्य कुफलं मया लब्धम् ।

माधवः – मकरन्द ! मानवजीवनं समस्यानां प्राङ्गणमस्ति। मानवः प्रतिदिनं ताः समस्याः परिश्रमरूपकेण कुठारेण दूरीकरोति । यदा कापि समस्या आगच्छति तदा परिश्रमी पुरुषः स्वपरिश्रममाध्यमेन तां समाधत्ते यदा आलस्यपरायणा जना भाग्योपरि सर्वं त्यक्त्वा विना परिश्रमं निवसन्ति। सर्वं स्वयं भविष्यतीति चिन्तयन्ति। एतादृशा विचारवन्तो जनाः सर्वदा जीवनसंग्रामे पराजिता भवन्ति । यः परिश्रमं करोति तस्य फललाभे कदा कदा विलम्बो भवति किन्तु फललाभोऽवश्यं भवति । इदमेव कारणं यत् परिश्रमी

जनः सर्वदा परिश्रमं करोत्येव।

मकरन्दः – हँ, माधव ! अहं सर्वमवगच्छामि। अद्य या मानवसभ्यता अद्य विकशिता दृश्यते तत्तु परिश्रमस्य फलम् अपाषणयुगादारभ्य मनुष्यः वेज्ञानिककाले यदुपस्थितः तस्य कारणं परिश्रमः। कदा कदा असाफल्यमपि लब्धम्। तथापि परिश्रमो न त्यक्तः। परिश्रमेण लक्ष्मीप्राप्तिर्भवति। अस्मिन् युगे यस्य निकटे लक्ष्मीरस्ति तस्य किं नास्ति। परिश्रमेण मानसिकानां तथाच शारीरिकाणां शक्तीनां विकासो भवति। कार्ये दक्षता आगच्छति। तेन साकं मनसि आत्मविश्वासोऽपि जाग्रतो भवति।

माधवः – मकरन्द ! परिश्रमद्वारेण मानवोऽद्य चन्द्रमसि उपस्थितो जातः। मङ्गलग्रहे प्रवेष्टुं चेष्टते। यदि परिश्रमः क्रियते न कापि कामना असफला भवेत्। भाग्यवादिनः सर्वदा सफलतां न लभन्ते। भगवान् तस्य सहायको भवति यो नालस्यपरायणः। यः कर्मठः। यः परिश्रमी। अस्मिन् संसारे वयं पश्यामो यत् श्रमकातराः दुःखिनो भवन्ति। तेषां बुद्धिर्न तीक्ष्णा भवति। तेषां शरीराणि मेदमयानि भवन्ति यद्द्वारा रोगास्तान् समाक्रमन्ति।

मकरन्दः – माधव ! सफलतायाः सूत्रं मया अधिगतम्। अधुना वृथा कालव्ययं न करिष्यामि। पठने ध्यानं दास्यामि। आलस्यं मम शत्रुः। आलस्यवशात् मया परिश्रमो न कृतः। समयो वृथा अपसारितः। अधुना ममात्मा क्रन्दति। परन्तु मयानुभूतं तस्य फलम्। मया निश्चयः कृतः भ्रमणादिकं सर्वं त्यक्त्वा केवलमध्ययने मनोनिवेशं करिष्यामि। यथाशक्ति श्रमं करिष्यामि। पश्यामि कथं परीक्षा व्यथादायिनी भवति।

माधवः – साधुः। साधुः। आनन्दस्य विषयो यत् यद्यपि विलम्बः तथापि त्वया चेतना लब्धा। तव प्रगतिं न कोऽपि रोद्धुं शक्नोति। तव शरीरे सामर्थ्यमस्ति। तव मनसि शक्तिरस्ति। तस्याः शक्तेः विनियोगः

आवश्यकः । अन्यथा सा शक्तिर्नष्टा भवेत् । ईश्वरेण प्रदत्ता शक्तिः सर्वेषां हितकारिणी। सा असाधारणास्ति। यः मानवयस्या विनियोगो योग्यरूपेण करोति स भाग्यवान् भवति। स भवति नरश्रेष्ठः । तस्य सर्वत्र पूजा भवति । प्रशंसा भवति ।

यस्तस्याः शक्तेरसदुपयोगं करोति स नराधमः पशुतुल्यो भ्रमति ।



# संलापः – २९

कमलः – अयं कलियुगः। तस्मात् सर्वत्र भ्रष्टाचारः। सामान्यो मानवो जीवितुं न शक्नोति। अर्थदानं विना न किमपि कार्यं भवति। सर्वे धनाभिलाषिणः। सर्वत्र धनं, धनमिति चीत्कारः।

विपुलः – अरे किमभवत् ? कथं क्रोधान्वितो भवति।

कमलः – कथं न भवामि ? पश्यतु। मम यानचालनप्रमाणपत्रं कुत्र पतितम्। तन्न मिलति।

विपुलः – अरे, इत्थं कथमभवत्।

कमलः – यद् भवितव्यं तत्तु भवत्येव। किं करोमि। मया पेटिकायां रक्षितम्। पेटिका केन अपहृता। तेन साकं प्रमाणपत्रमपि केनापहृतम्।

विपुलः – भवन्तु पुनर्प्राप्तये बहुकष्टं भवति। धनं दत्वापि कार्यसिद्धिर्न भवति। प्रदूषितोऽयं समाजः। उत्कोचं विना न किमपि किञ्चिदिह करोति।

कमलः – आम्, अहं जानामि। तव कथनं सत्यमस्ति।

विपुलः – अस्मिन् युगे धनमोहः सर्वत्र व्याप्नोति। धर्माधर्मविषये न कोऽपि चिन्तयति। पापपुण्यविषये जना न चिन्तयन्ति। धनार्थं अन्यायमार्गोपरि चलन्ति। अनीतिमाचरन्ति। असत्यं वदन्ति। सरलान् त्रासयन्ति। धार्मिकान् शोषयन्ति। भ्रष्टाचारं परिपोषयन्ति। तस्मादत्र शान्तिर्नास्ति। सुखं नास्ति। सन्तोषो नास्ति।

कमलः – यद् भवतु नाम अस्माभिः अस्मिन् संसारे जीवितव्यम्। सुखदुःखे भोक्तव्ये। अयं यन्त्रयुगः। यन्त्रवन् मानवो धावति। धावनं तस्य जीवनमिति। यः प्रधावति तस्य सुखं कुत्र ?

अस्य सर्वस्य मूलेऽस्ति असन्तोषः। सन्तोषं विना सुखं नास्ति। तस्मात् कथ्यते सन्तोषः परमं धनम्। भगवद्गीतायां कथितम् – 'अशान्तस्य कुतः सुखम्' ?

विपुलः – किन्तु इत्थं जीवनेन मूल्यं किमस्ति।

कमलः – सर्वे मूल्यविषये न चिन्तयन्ति। सर्वेषां विचारशक्तिर्नास्ति। कति जनाः पशुवत् जीवन्ति। आहारनिद्रामैथुनानि तेषां जीवनलक्ष्यमस्ति। ते स्वर्गाय न चेष्टन्ते। न वैकुण्ठं कामयन्ते। नरकं किमस्ति तेषां धारणा नास्ति ते सामान्या भवन्ति।

विपुलः – सामान्यानां कथा भिन्ना। असामान्या अपि सामान्यसदृशा व्यवहरन्ति। ततो व्याधिवेदनाविदारिताः सन्तः जीवनमुपभोक्तुं न शक्नुवन्ति। यन्त्रणास्तान् चाक्रमन्ति। ते नष्टा, भ्रष्टा, मर्दिता भवन्ति। शाश्वतसुखं किमस्ति ज्ञातुं न पारयन्ति।

कमलः – अरे, संसारोऽयं दुःखमयः। दुःखदैत्यः सर्वत्र सर्वस्मिन् काले विभ्रमति। अस्मिन् संसारे सुखं कुत्र ?



Books - Original / Edited



1 Ānandabodha Yati : Life and Philosophy Eastern Book Linkers, Delhi, 1997.
2. Suvrttatilaka of Kṣemendra (Edited) Paramamitra Prakashan, Delhi, 1998.
3 Research in Indology : A New Perspective (Edited), Bharatiya Kala Prakashan, Delhi, 1998.
4. Kumārasambhavam (5 th Canto)(Edited with Text & English Translation), Bharatiya Kala Prakashan.Delhi, 1998
5. Manusmṛti (II & III Chapters) Edited with Text & English Translation, Paramamitra Prakashan, Delhi, 1999.
6. Studies in Sanskrit Śāstras, Paramamitra Prakashan, 2000.
7. A Survey of Post-Śaṅkara Advaita Vedānta, Edited, Paramamitra Prakashan, Delhi, 2000.
8. Vanavalli (A Collection of Poems in Sanskrit), Lions Club of Lalbaug, Baroda, 1996.
9 Pratidhvani, (A Collection of Poems in Sanskrit), Utkala Sahitya Samaja, Allahabad, 1996.
10. Urvee (A Collection of Poems in Sanskrit), Paramamitra Prakashan.
11. Niravajhara (A Collection of Poems in Sanskrit), Paramamitra Prakashan, Delhi, 1998.
12. Satadalam (A Collection of Poems in Sanskrit), Paramamitra Prakashan, Delhi, 2002.
13. Studies in Vedānta Philosophy, Bharatiya Kala Prakasan, Delhi, 2002
14. Bhāminivilāsa, Text with English Translation and Sanskrit commentary Edited, Bharatiya Kala Prakashan, Delhi, 2004.
15. Chhinnachhāyā, Arvachina Sanskrit Sahitya Parishad Baroda, 2005
16. Balakā, Arvachina Sanskrit Sahitya Parishad, Baroda 2006
17. Satakakāvyas of Bhatrhari Bharatiya Kala Prakashan Delhi 2006
18. Lokaprajna, Edited - 2006.
19. Kavyakairavam, Arvachina Sanskrit Sahitya Parishad, Baroda, 2007
20. Kāvyamṛtatarangini, Arvachina Sanskrit Sahitya Parishad 2007
21. Avenues in Sanskrit Literature, Bharatiya Kala Prakashan 2008
22. Kavyadarsa of Dandin, Edited, Bharatiya Kala Prakashan 2008
23. Samlapasarani, Arvachina Sanskrit Sahitya Parishad Baroda 2009